कु॰टी॰
॰चं॰

श्रीगणेशायनमः अनुचिंत्यमहालक्ष्मीं हरिलोचनचंद्रिकां कुर्वे कुवलयानंदसदलंकारचंद्रिकां १ चिकीर्षिताविघ्नसिद्धयइष्टदेवतांस्तौतिभ्रमरी
ति अत्रचरणमेवपंकजमितिमयूरव्यंसकादिसमासाश्रयणात्सपरिणामालंकारः चरणेआरोप्यमाणस्यपंकजस्यारोपविषयचरणात्मतापरिणतिंविना
दुरितदूरीकरणक्रियार्थत्वासंभवात् परिणामःक्रियार्थश्चेद्विषयात्मनेतितल्लक्षणात् नचपंकजमिवचरणमितिपूर्वपदार्थप्रधानउपमितसमास
एवास्त्वितिशंक्यं भ्रमरीणांकवरीभारस्यकेशपाशस्यसंबंधिनीसौगंध्यलोभात् तत्संस्पर्शाद्याभ्रमरीतयामुखरीकृतमितिविशेषणास्वारस्यानुगुण्याभावा
त् तस्यपंकजगतत्वेनैवप्रसिद्धेरिति एतद्विशेषणावगतेनचपादपतनेनाभिव्यज्यमानागौरीविषयासुरांगनागतारतिःकविगतांतांपुष्णातीतिप्रेयोलं

श्रीगणेशायनमः भ्रमरीकवरीभारभ्रमरीमुखरीकृतम् दूरीकरोतुदुरितंगौरीचरणपंकजम्
१ परस्परतपःसंपत्फलायितपरस्परौ प्रपंचमातापितरौप्राञ्चौजायापतीस्तुमः॥ २॥

कारोपिबोध्यः १ परस्परेतिप्राञ्चौपुरातनौजायापतीअर्थादुमामहेश्वरौस्तुमः किंभूतौप्रपंचस्यजीववर्गस्यमातापितृरूपौ निरुपाधिकृपाश्रयत्वाद्धि
तोपदेष्टृत्वाच्च तथापरस्परसंबंधिन्यास्तपःसंपत्तेःफलवदाचरितपरस्परस्वरूपंययोस्तौ अत्रपरशब्दस्यक्रियाविनिमयविवक्षायांकर्मव्यतिहारेसर्व
नाम्नोद्वेवाच्येइतिवार्तिकेनद्विर्भावःअसमासवद्भावेपूर्वपदस्थस्यसुपःसुर्वक्तव्यइत्यनेनसुपःस्वादेशश्चपरस्परशब्दव्युत्पत्तेःपार्वतीतपःसमृद्धिफलायितःप
रमेश्वरःपरमेश्वरतपःसंपत्फलायिताचपार्वतीयस्यालभ्यतेतपःसंपत्तेश्वफलंनिरतिशयानंदइतितदुपमयापरस्परंपरमप्रेमास्पदत्वलक्षणःशृंगारोव्यज्य
मानःसौभाग्यातिशयव्यंजनमुखेनशिवयोर्भावप्रकर्षपर्यवस्यतीतिसहृदयैराकलनीयम् मातापितराविति रूपकाभ्यामुक्तोपमयोःसंसृष्टिःपरस्परंचोपमयोःफला

मप्रतिपत्ति   पादयिषितानामलंकाराणामनुत्पत्तेः स्वतोऽपुरुषार्थतया फलत्वायोगान्नस्या रसास्वादौपयिकत्वेन फलत्वं प्रेक्षावतां प्रवृत्तग्रंथप्रवृत्तनयेस्तु पित्तुं शृंगाररसाधिदैवतश्रीकृष्णं प्रति रसास्वादानंदं प्रार्थयते उद्घाट्येति समुकुंदो मे मह्यं प्राभ्वत् भवं शाश्वतिकं भग्नावरणतया सदाप्रकाशमानं अत्रे यो विगलितवेद्यांतरमानंदरसो वै रसइति श्रुतेः रसपदाभिधेयं दिशतु ददातु इत्यर्थः यथाश्रुते मुक्तिप्रार्थनायाः प्रकृतेऽसंगतत्वापत्तेः सकः योऽधन्यैर्महामहिमपुण्यशालिभिर्नारदादिमुनिभिर्योगकया योगकौशलेन हृदयाब्जस्य उरसो मध्यवर्तिनो हृदयपुंडरीकस्य कोशमुकुलं अधोमुखतया विद्यमानं उद्घाट्य रेचकप्राणायामेनोर्ध्वमुखं कृत्वा चिरादं हृकालं यथारुचि यथेच्छं गृह्यमाणोऽपि रामकृष्णाद्यभिमतमूर्तिध्यानमात्ररोक्रियमाणोऽपि परितः पूर्णरूपमस्य तथाभूतोऽपरिच्छिन्नब्रह्मरूपः अविरतं निरंतरमुक्तिदशायां स्फुरति प्रकाशत इति विरोधालंकारः औपासनिकरूपस्य कल्पितत्वेन च तत्परिहारः अथवा योगिभिरप्यचिंत्यस्वरूप इति माहात्म्यातिशयवर्णनं अत्र योगिगतभगवद्विषयकरतिभावस्य कविगतं तत्प्रसंगतया प्रेयोऽलंकारः ३ चिकीर्षितस्य ग्रंथस्य प्रयोजनाभिधेये प्रदर्शयति अलंकारेष्विति एतच्चोभयान्न

उद्घाट्य योगकलया हृदयाब्जकोशं धन्यैश्चिरादपि यथारुचि गृह्यमाणः ॥ यः प्रस्फुरत्यविरतं परिपूर्णरूपः श्रेयः स मे दिशतु शाश्वतिकं मुकुंदः ३ अलंकारेषु बालानामवगाहनसिद्धये ललितः क्रियते तेषां लक्ष्यलक्षणसंग्रहः ४ येषां चंद्रालोके दृश्यंते लक्ष्यलक्षणश्लोकाः प्रायस्त्यवतेषामितरेषां तु भिनवा विरच्यंते ५ ॥

अलंकारेषु अर्थालंकारेषूपमादिषु विषये बालानामव्युत्पन्नानां तेष्ववगाहनस्य व्युत्पत्तेः सिद्धये इत्यर्थः तेषां ये लक्ष्यलक्षणे तयोः संग्रह इति नित्यसापेक्षत्वात्समासः लक्ष्यमुदाहरणं अलंकारत्वं च रसादिभिन्नव्यंग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयिता संबंधावच्छिन्ना चमत्कृतिजनकतावच्छेदकतातदवच्छेदकत्वं अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः शब्दार्थयोर्ज्ञानविषयचमत्कृतिजनकतायां विषयितया वच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात् रसवदाद्यलंकारसंग्रहाय व्यंग्योपमादिवारणाय च भेदद्वयगर्भसत्यंतोपादानं ४ परकीयग्रंथापहारशंकानिरासायाह येषामिति येषामलंकाराणां चंद्रालोके चंद्रालोकाख्यग्रंथे तएवेत्यनंतरं लिख्यंत इति शेषः तत्रस्थितानामपि केषांचिदलेखनात्प्रायइत्युक्तं यथाऽनंतरश्लोकस्योत्तरार्धं तत्रैवं दृश्यते हृदये लेखनीरुद्धैस्त्वं गिरस्तनयोरिवेति स्वयं तत्र्यदेव विरच

ह्यस्तत्सर्वालंकारेषु निरूपणीयेषु बहुलालंकारघटकतया सुप्रसिद्धतया च प्रथममुपमालंकारं लक्षयति उपमेति अयं च लक्ष्यनिर्देशः शेषं लक्षणं सादृश्यलक्ष्मीश्चमत्कृतिजनकता तद्विशिष्टसादृश्यमिति यावत् धर्मधर्मिणोरभेदोपचारात् लक्षणं समाचष्टे यत्रेति यत्र काव्ये वृत्तित्वं सप्तम्यर्थः तच्च शक्तिलक्षणान्यतरसहकारणबोधकत्वसंबंधेन उपमानमधिकगुणं चंद्रादि उपमेयं वर्ण्यमानं कामिनीवदनादि सहृदयः काव्यभावनापरिपक्वबुद्धिः व्यंग्यस्य मर्यादा प्रतीतिनियमरूपा तया सा व्यंजनेत्यर्थः अत्र चोपमानोपमेययोरिति स्वरूपकथनं न तु लक्षणांतर्गतं आवर्तनीयाभावात् आत्माश्रयापादकत्वाच्च उपमानत्वोपमेयत्वयोः रूपमाघटितत्वात् एतच्चाग्रे व्यक्तीभविष्यति इत्थं चालंकारत्वे सति सादृश्यत्वमुपमालंकारलक्षणं बोध्यं एवमग्रेप्यधिकारप्राप्तमलंकारत्वविशेषणं बोध्यं हंसीत्यादि अत्र तावदिवार्थसादृश्यनिरूपितत्वसंसर्गेण हंस्यादेरन्वयः सादृश्यस्य प्रयोजकत्वसंसर्गेण स्वर्गंगावगाहनाश्रयत्वरूपे साधारणधर्मे तस्य च स्वरूपसंबंधेन कीर्तौ सादृश्यस्य निपातार्थतया नामार्थं प्रति साक्षात्संबंधेन विशेष्यत्वे विशेषणत्वे च बाधकाभावात् तथा च हंसीनिरूपितसादृश्यप्रयोजकस्वर्गंगाकर्मकावगाहना

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः हंसीव कृष्ण ते कीर्तिः स्वर्गंगामवगाहते ६ यत्रोपमानोपमेययोः सहृदयहृदयाह्लादकत्वेन चारुसादृश्यमुद्भूततया उल्लसति व्यंग्यमर्यादां विना स्पष्टं प्रकाशते तत्रोपमालंकारः हंसीवेत्युदाहरणं ॥ ६ ॥

श्रयत्ववती कीर्तिरिति बोधः न चैवं स्वर्गंगावगाहनमिव शब्दश्लेषाद्यप्रिमग्रंथे धात्वर्थस्य समानधर्मत्वाक्तिर्विरुद्धेति वाच्यं तदाश्रयत्वस्य समानधर्मत्वे तस्य तथात्वस्योचितायातत्वेन विरोधाभावात् तथा सति तत्रैव कुतो न सादृश्यान्वय इति चेत् न धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेण शाब्दबोधे वि ॥ शेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वात् न च निपातार्थभिन्नवृत्तित्वेन प्रकारताविशेषणीयेति वाच्यं घटो न पश्यतीत्यादौ घटाद्यन्वितामावस्य कर्मतासंसर्गेण दर्शनेऽन्वयापत्तेः यदि तु धात्वर्थे पितात्पर्यवशात्सादृश्यान्वयोऽनुभवसिद्धस्तदा धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबंधेनान्वयबुद्धिं प्रति निरुक्तजन्योपस्थितेः प्रतिबंधकत्वमात्रं परिकल्प्य घटो न पश्यतीत्यादौ पूर्वोक्तान्वयबोधनिराकरणीय इति दिक् एवमरविंदमिव सुंदरवदनमित्यादावरविंदादिनिरूपितसादृश्यस्य प्रयोजकतासंसर्गेण सुंदरपदार्थैकदेशेऽपि सुंदरत्वेऽनुभवबलादन्वयस्तद्विशिष्टस्य चाभेदेन मुखादे ॥

दृश्यं चारविंदनिरूपितसादृश्यप्रयोजकसौंदर्यवदभिन्नं वदनमित्यन्वयबोधः अरविंदसुंदरमिति समासे त्वरविंदपदेनारविंदनिरूपितसादृश्यप्रयोजकं लक्ष्यते तच्चाभेदेन पदार्थैकदेशे सौंदर्येन्वेति एवं चारविंदनिरूपितसादृश्यप्रयोजकाभिन्नसौंदर्यवदभिन्नं वदनमित्यन्वयबोधः एकदेशान्वयायोगादरविंदपदमेव लक्षणया सर्वार्थबोधकं सुंदरपदं तु तात्पर्यग्राहकमित्येके अरविंदमिव वदनमित्यत्रारविंदनिरूपितसादृश्यवद्वदनमिति बोधः सादृश्यस्य निपातार्थतयाभेदेन नामार्थान्वये बाधकाभावात् अरविंदमिव भातीत्यत्र भातेर्ज्ञानार्थकत्वेऽरविंदपदस्यारविंद निरूपितसादृश्यप्रकारकज्ञानविषये लक्षणा तस्य चाभेदेन मुखादावन्वयः शेषं तात्पर्यग्राहकं पूर्वोक्तदिशा वा सादृश्यस्यैव प्रकारितासंसर्गेण धात्वर्थेन्वयः अत्रैव सौंदर्येणेति धर्मोपादाने तृतीयार्थस्य प्रयोज्यत्वस्य सादृश्येन्वयात्सौंदर्यप्रयोज्यारविंदनिरूपितसादृश्यप्रकारकज्ञानविषय इति बोधः आद्यकल्पे तु अरविंदपदमेव सर्वार्थबोधकमितरत्तात्पर्यग्राहकमिति ध्येयं इयं च

इयं च पूर्णोपमेत्युच्यते हंसीकीर्तिः स्वर्गगावगाहनमिव प्राव्दश्चेत्येतेषामुपमानोपमेय साधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् ॥

सादृश्यस्य पदार्थांतरत्वमते शाब्दबोधरीतिरुपदर्शिता तस्य समानधर्मरूपत्वे तु चंद्र इव मुखमित्यादौ चंद्रवृत्तिधर्मवन्मुखमिति बोधः अत्रैवाह्लादकमिति समानधर्मोपादाने इवार्थस्य धर्मस्याह्लादकत्वे पदार्थैकदेशेऽन्वयः तदसहिष्णुतायां तु चंद्रनिष्ठाह्लादकत्ववति आह्लादकपदस्य लक्षणा चंद्रादिपदं तात्पर्यग्राहकं चंद्रमित्यत्राप्येकदेशे सादृश्ये चंद्रान्वयः ससंबंधिकत्वात् सदृशपदं वा चंद्रसादृश्यविशिष्टे लाक्षणिकं अत्रैवाह्लादकत्वेनेत्युक्तावभेदस्तृतीयार्थस्तस्य च सदृशपदार्थैकदेशे धर्मेन्वयस्तथा चाह्लादकताभिन्नचंद्रवृत्तिधर्मवदभिन्नं मुखमिति बोधः सदृशपदमेव वा सर्वार्थबोधकमितरत्तात्पर्यग्राहकमित्येवंविधान्वयसरणिः श्लेषस्त्वत्र शाब्दमुत्पातिनिपुणैरनुसंधेयाः इत्थं प्रसक्तानुप्रसक्तं परिचिंतनेन इदं पूर्णोपमेतीत्यनेन रसालंकारिके रीतिरनुसरणीया तत्वं च विशेषत उपात्तशाब्दश्लिष्टप्रतिपादितोपमानोपमेयकत्वे सति विशेषतः शाब्दोपात्तसमानधर्मकत्वे सति विद्यमानः स्वनिरूढशाब्द ... उपमानत्वप्रकारकज्ञान ...

कु॰टी॰ उपमेयत्वं लुप्तायां स्मरवधूयंतीत्यादावात्मन उपमेयस्याध्याहृते नात्मानमितिशब्देन योधनादुपात्तेति शब्दविशेषणं [illegible] ।।
चं॰ स्य सदृशेन दृश्यन इत्येवं विधायां लुप्तोपमानायामुपमानस्य च सदृशपदोपात्तत्वाद्विशेषत इति उपमेयोपमानतावच्छेदकरूपेणेत्यर्थः धर्मलुप्तायामप्युप
३ पमावाचकेन सामान्यतो धर्मस्योपात्तत्वाद्विशेषत इति उपमाप्रयोजकतावच्छेदकरूपेणेत्यर्थः वाचकलुप्तायामपि लक्षणयोपमानादिपदेनोपमावग
मात्तद्वारणाय विशेषतः स्वनिरूढेति उपमायां च निरूढा इव वद्वा यथा शब्दादयस्तार्घभिः युक्तोक्तिसंगृहीता इवादयः अत्र निपातरूपस्येवादेरुपसर्गव
त् द्योतकत्वमेव कथमन्यथा शारैरुत्पलैरिवोदीच्यानुद्धरिष्यन् रसानिवेत्यादावुत्पलादिपदोत्तरतृतीयादिसंगतिः उत्पलादेरुद्धरणक्रियाप्रत्यकरणत्वात् इवा
र्थसादृश्यान्वयित्वे तु करणीभूतशारविशेषणत्वाभावाच्च द्योतकत्वे तूत्पलादिपदस्योत्पलसदृशपरतयोत्पलसदृशैः शारैरिति शारविशेषणत्वेन तृतीयादिसं
गतिरिति वैय्याकरणमतं तु नादरणीयं उपास्यते गुरुरित्यादौ धात्वर्थासनक्रियायाः अकर्मकतया कर्मलकारानुपपत्तिरूपबाधकस्योपसर्गवाचकत्व यामि
वेवादिवाचकत्व पक्षभावेन दृष्टांतवैषम्यस्यास्फुटत्वात् विशेषणविशेष्ययोः समानविभक्तिकतायां विशेष्येणसहैकार्थभवेद्यत्रविशेषणं तत्र लिंगादयः
प्रायोविशेष्यस्थाविशेषण इत्यनुशासनस्यैवोपमानोपमेययोरपित्स्यांलिंगसंख्याविभेदेपिउपमानोपमेयता विभक्तिः पुनरेकैव उपमानोपमेययोरित्य
नुशासनस्य सत्त्वेनोपमानपदोत्तरतृतीयादेः साधुत्वार्थंतयोपपत्तेश्च तस्माद्वाचकत्वमेवेवादीनां युक्तं चैतत् अन्यथा सकलालंकारिकसंमतस्येवशब्दप्र
योगे श्रौतीत्वस्य दत्तजलांजलित्वापत्तेः रूढिप्रयोजनयोरन्यतरस्याभावेनेवशब्दादिपदेन चंद्रसदृशलक्षणायां निषिद्धलाक्षणिकत्वरूपनेयार्थत्वदोषाप
पत्तेश्च अपि चंद्र इवादेर्द्योतकत्वे नये चंद्रादेरुपमानस्य यदार्थैकदेशतया तत्र साधारणधर्मान्वयानुपपत्तिरितिदिक् उपमानेत्यादि उपमानत्वं चोपमानिरू
पकत्वेन विवक्षितत्वं तदाश्रयत्वेन विवक्षितत्वं चोपमेयत्वं साधारणत्वं च धर्मस्यारसिकमौपचारिकं बिंबप्रतिबिंबभावकृतं श्लेषकृतं वस्तुप्रतिवस्तुभा
वेन समासभेदाश्रयणेनेत्यनेकधा चित्रमीमांसायां प्रपंचितं तत्र स्वर्गगावगाहनस्य तथात्वमौपचारिकं कीर्तेस्तस्यारसिकत्वाभावात् उपादानादिति वाच
कस्योपादाने निर्देशः इतरेषां तु शब्देन प्रतिपादनं तदितिवितनोर्थ ६

साधारण्यप्रकारविशेषोपदर्शनायोदाहरणांतरमाह यथावेति गुणदोषाविति गुणदोषावर्यात्परस्य गृह्णन् ज्ञानन् बुधः पंडितः पूर्वं पूर्वनिर्दिष्टं गुणं शिरसा श्लाघते आंदोलितेन शिरसा अभिनंदयति परं परतो निर्दिष्टं दोषं कंठे नियच्छति निरुणद्धि वाचाकंठात् वहिर्नोद्घाटयतीत्यर्थः कद्रुवदिंदुक्ष्वेडौ चंद्रगरले गृह्णन्नुपाददान ईश्वरो हर इव सोपि हि पूर्वं चंद्रं शिरसा श्लाघते तत्पूर्वकं धारयति परं च गरलं कंठे नियच्छति स्थापयतीति क्ष्वेडस्तु गरलं विषमित्यमरः ७ शंकते अत्र यद्यपीति साधारणस्तत्वेनाभिमतो धर्मः गृह्णन् शिरसा श्लाघते पूर्वमित्यादिनोक्तो यद्यपि नैकोन साधारण इति योजना गृह्णन्नित्यादिनोक्त एकोपि धर्मः साधारणो नेति वा यथाश्रुते साधारणस्य साधारणत्वाभावोक्तेरसंगतत्वापत्तेः साधारण्याभावे हेतुः उपमान इत्यारभ्य इति भेदादित्यंतेनोक्तः

यथा वा गुणदोषौ बुधो गृह्णन्निंदुक्ष्वेडाविवेश्वरः शिरसा श्लाघते पूर्वं परं कंठे नियच्छति ७ अत्र यद्यपि उपमानोपमेययोर्नैकः साधारणो धर्मः उपमाने ईश्वरे चंद्रगरलयोर्ग्रहणमुपादानं तयोर्मध्ये पूर्वस्य चंद्रस्य शिरसा श्लाघनं वहनं उत्तरस्य गरलस्य कंठे नियमनं संस्थापनं उपमेये बुधे गुणदोषयोर्ग्रहणं ज्ञानं तयोर्मध्ये पूर्वस्य गुणस्य शिरसा श्लाघनं शिरःकंपेनाभिनंदनं उत्तरस्य दोषस्य कंठे नियमनं कंठादुपरि वाचा अनुद्घाटनमिति भेदात् तथापि चंद्रगरलयोर्गुणदोषयोश्च विंबप्रतिविंबभावेनाभेदादुपादानज्ञानादीनां गृह्णन्नित्येकशब्दोपादानेनाभेदाध्यवसायाच्च साधारणधर्मत्वमिति पूर्वस्माद्विशेषः ॥ समाधत्ते तथापीति वस्तुगत्या साधारण्याभावेपीत्यर्थः चंद्रगरलयो

रित्यादि यथाक्रमं चंद्रगुणयोर्गरलदोषयोश्चेत्यर्थः विंबप्रतिविंबभावेन प्रतीयमानसादृश्ययोरुपमानोपमेयधर्मयोर्भिन्नशब्दोपात्तत्वरूपेण अभेदात् अभेदाध्यवसायात् एतच्च साधारणधर्मत्वेत्यनेनान्वितं ज्ञानादीत्यादिना शिरसा वहनाभिनंदनयोः कंठस्थापनतद्वहिरनुद्घाटनयोश्च संग्रहः गृह्णन्नित्यादौ त्यादिना च शिरसा श्लाघते कंठे नियच्छतीत्यनयोः संग्रहः अभेदाध्यवसायादिति अभेदस्याध्यवसायादाहार्यनिश्चयादित्यर्थः साधारणधर्मत्वेनेति साधारणधर्मत्वाभिमानविषयतेतीत्यर्थः पूर्वस्मात्पूर्वोदाहरणात् इति दिक् [illegible] न चैवं साधर्म्यप्रतीत्युपपादनेपि वस्तुतस्तदभावात्कथमुपमालक्षणसमन्व

[illegible] साधारणधर्मत्वस्यैवोपमालक्षणत्वमित्यभिप्रायादिति

टाप
त्रं०
४

लोकोचिव प्रातीतिक नावव्यपदेशस्य गगनजलाशयादिगत चन्द्रादि विषयतया प्रसिद्ध [illegible] शंकायामाह वस्तुतइत्यादि अभिन्नयोःतथा
ध्यवसितयोः पृथगिति भिन्नशब्देनेत्यर्थः बिंबप्रतिबिंबभावइति बिंबप्रतिबिंबभावपन्न वाच्य [illegible] तइत्यर्थः पूर्णाख्यामुपमनादिसमग्रता
नियमप्रसिद्धेस्तद्विपरीतायांलुप्तोपमायांसर्वलोपनियमाशंकानिरासायलक्षणपूर्वकंतांविभजते वर्ण्यस्य [illegible] शब्दार्थे तदनंतरं चलोपे [illegible]
हार्य एवं चतरेतरयोगाविवक्षयावर्ण्यस्योपमानस्यधर्मस्योपमावाचकस्यवालोपे अन्यतमानुपादानेलुप्तोपमा साचएकद्वित्र्यनुपादानैरष्टधा भिन्नेति पूर्वोपरा

वस्तुतोभिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानेबिंबप्रतिबिंबभावइति आलंकारिकसमयः वर्ण्योपमा
नधर्माणामुपमावाचकस्य च एकद्वित्र्यनुपादानैर्भिन्नालुप्तोपमाष्टधा ८ तडिद्गौरीदुतुल्यास्याकर्पूरंतीदृशोसमःकांत्यास्यरवधूयंतीह
शान्वीरहोमया ९ यत्तयामेलनेतत्रलाभोमेयस्यतद्रतेः तदेतत्काकतालीयमवितर्कितसंभवं १० उपमेयादीनांचतुर्णांमध्येएकस्यद
यास्त्रयाणांवाप्रतिपादकशब्दाभावेनलुप्तोपमेत्युच्यते साचाष्टधायथा वाचकलुप्ता १ धर्मलुप्ता २ धर्मवाचकलुप्ता ३ वाचकोपमेय
लुप्ता ४ उपमानलुप्ता ५ वाचकोपमानलुप्ता ६ धर्मोपमानलुप्ता ७ धर्मोपमानवाचकलुप्ताचेति ८ तत्रोपमानलोपरहिताश्चत्वारोभे
दास्तडिद्गौरीत्यादिश्लोकेनप्रदर्शिताः तद्दतोभेदाउत्तरश्लोकेनदर्शिताः तत्रतडिद्गौरीत्यत्रवाचकलोपस्तडिदिवगौरीत्यर्थेउपमानानिसा
मान्यवचनैरितिसमासविधायकशास्त्रकृतः इंदुतुल्यास्येत्यत्रधर्मलोपःसत्वेऽपिकान्त शास्त्रकृतःकांत्याइंदुतुल्यास्येत्यपिवक्तुंशक्यत्वात्

भ्यामुक्तंभवति ८ तडिदित्यादीन्युदाहरणानि अर्थतोव्याचष्टे उपमेयादीनामिति वस्तुतेलाघवात्पूर्णाभिन्नत्वंलक्षणंबोध्यं लक्षणवाक्यगतंक्रममुपेक्ष्योदाहर
णक्रमानुसारेणविभागंदर्शयति यथेत्यादिवाचकलुप्तेति वाचकत्वंचात्रानुपूर्वीविशेषवत्तयोपमाबोधनेनिरूढत्वं तच्च शक्त्यानिरूढलक्षणयावा तत्राद्यमिवादे
र्द्वितीयंतुसुहृत्सदादेरितितदभावात्तडिद्गौरीत्यादौवाचकलोपःसमासानुशासनेननिरूढलक्षणावगमेऽपिआनुपूर्वीविशेषवत्तयाशब्दविशेषस्यतदबोधकत्वात् शास्त्र

॥

कर्पूरंतीसत्रेति अत्र सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्य इत्यनेन विहितः क्विप् लुप्तोपि स्मर्यमाणो धर्ममात्ररूपं आचारं बोधयति कर्पूरपदं च लक्षणया क-
र्पूरसादृश्यं तस्य चातिरिक्तत्वे पूर्ववत्प्रयोजकतासंसर्गेणाचारेन्वयो धर्मरूपत्वे त्वभेदेन वस्तुतस्तु क्विप्लोपाप्रतिसंधानेपि तथाबोधात्कर्पूरादिशब्दा एव कर्पूरा-
दिसादृश्यप्रयोजकाभिन्नं तत्सादृश्याभिन्नं वाचारं लक्षयंतीत्युक्तं न नु वाचकस्येवादेरनुपादानात्लोपो युक्तः साधारणधर्मस्य त्वाचाररूपस्य क्विपि तु पात तथा
कथं लोपस्तत्राह कर्पूरवदानंदात्मकाचारार्थस्य क्विप इति कर्पूरस्येवेतीवार्थवतिः आनंदात्मकः जनकतासंबंधेन वस्तुगत आनंदस्वरूपो य आचारस्तद्बोधकस्ये-
त्यर्थः ननु क्विप्लोपाज्ञानेप्याचारप्रतीतेः कर्पूरादिपदानामेव तद्बोधकत्वपक्षे कथं धर्मलोपः संगमनीय इति चेत् अत्र प्राचः एवमपि तद्वाचकतया विहितस्य
क्विपो लोपात्तल्लोपव्यपदेशः अत एवात्र समानार्थकः क्यङ्नोपात्तः तस्यालुप्तत्वादित्याहुः नव्यास्तु धर्ममात्ररूपस्याचारस्योपादानेपि आनंदत्वादिना विशेष-

कर्पूरंतीत्यत्र धर्मवाचकलोपः कर्पूरमिवाचरंतीत्यर्थे विहितस्य कर्पूरवदानंदात्मकाचारार्थकस्य क्विप इव शब्देन सह लोपात् अत्र
धर्मलोप ऐच्छिकः नयनयोरानंदात्मकतया कर्पूरंतीति तदुपादानस्यापि संभवादिति कांत्या स्मरवधूयंतीत्यत्र वाचकोपमेयलोपः
अत्र कांत्येति विशेषणसामर्थ्यात्स्वात्मानं कामवधूमिवाचरंतीत्यर्थस्य गम्यमानतया स्वात्मन उपमेयस्य सहोपमावाचकेनानुपा-
दानात् स त्वैच्छिकः स्वात्मानं स्मरवधूयंतीत्युपमेयोपादानस्यापि संभवात्

रूपेणानुपादानाद्धर्मलोपो युक्त एव अन्यथा इंदुतुल्यास्येत्यादेर्धर्मलुप्तोदाहरणस्यासंगतत्वापतेः न चैवं क्यङादावपि धर्मलुप्तास्यादिति वाच्यं इष्टापतेरि-
त्याहुः स्मरवधूयंतीत्यत्रेति ननूपमानादाचार इति कर्मभूतादुपमानादाचारे क्यचो विधानात्स्मरवधूं रतीमिवाचरंतीत्यवगमे स्वात्मानमन्यां वेति कथं निर्ण-
यस्तत्राह विशेषणेति रत्यनुरूपाचरणस्य कांतिकरणकत्वरूपविशेषणसामर्थ्यादित्यर्थः कांतेः स्वरसतः स्वीयत्वावगमादिति भावः न चात्मन उपमेयस्य त-
न्वीपदेनोपादानात्कथं लोप इति वाच्यं तस्या द्वितीयांततया कर्मभूतोपमेयासमर्पकत्वात् आत्मानमित्यध्याहृते नैव तद्बोधात् अत्र स्मरवधूपदेन स्म-
रवधूसादृश्यं लक्ष्यते तस्य च प्रयोजकत्वसंसर्गेणाभेदेन वा ।। चारेन्वयः तथा च स्मरवधूसादृश्याभिन्न आत्मकर्मको य आचारस्तदाश्रयत्वान्वाति बोधः ।।

का० प्र०
४

उक्तावेव प्रतीतावदनाववपदेशस्य गगनजलाशयादिगत चन्द्रादिविषयतया प्रसिद्ध ... भ्यवसिततयोः पृथगिति भिन्नशब्देनेत्यर्थः बिंबप्रतिबिंबभावइति बिंबप्रतिबिंबभावपदवाच्यमित्यर्थः ... इत्यर्थः पूर्णाखामुपमनादिसमग्रताि नियमप्रसिद्धेस्तद्विपरीता याऽलुप्तोपमायां सर्वलोपनियमाशंकानिरासायलक्षणपूर्वकं तां विभजते वर्ण्यस्येति ... चकारो वा शब्दार्थे तदनंतरं वलोपे इत्यध्या- हार्यं एवं चेतरेतरयोगाविवक्षया वर्ण्यस्योपमानस्य धर्मस्योपमावाचकस्य वा लोपे अन्यतमानुपादानेलुप्तोपमा सा च एकद्वित्र्यनुपादानेऽष्टधा भिन्नेति पूर्वोपरा

वस्तुतोभिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादाने बिंबप्रतिबिंबभावइति आलंकारिकसमयः वर्ण्योपमा नधर्माणामुपमावाचकस्य च एकद्वित्र्यनुपादानैर्भिन्नालुप्तोपमाष्टधा ८ तडिद्गौरीन्दुतुल्यास्याकर्पूरंतीदृशोर्मम कांतास्मरवधूयंतीदृ श्यतन्वीरहोमया ९ पत्तयामेलनेतत्रलाभोमेयश्वतद्गतेः तदेतत्काकतालीयमवितर्कितसंभवं १० उपमेयादीनां चतुर्णां मध्ये एकस्य द्व योस्त्रयाणां वा प्रतिपादकशब्दाभावेन लुप्तोपमेत्युच्यते सा चाष्टधा यथा वाचकलुप्ता १ धर्मलुप्ता २ धर्मवाचकलुप्ता ३ वाचकोपमेय लुप्ता ४ उपमानलुप्ता ५ वाचकोपमानलुप्ता ६ धर्मोपमानलुप्ता ७ धर्मोपमानवाचकलुप्ता चेति ८ तत्रोपमानलोपरहितास्त्वारो भे दास्तडिद्गौरीत्यादिश्लोकेन प्रदर्शिताः तदुत्तरभेदा उत्तरश्लोकेन दर्शिताः तत्र तडिद्गौरीत्यत्र वाचकलोपस्तडिदिव गौरीत्यर्थे उपमानानिसा मान्यवचनैरिति समासविधायकशास्त्रकृतः इंदुतुल्यास्येत्यत्र धर्मलोपः सत्वेऽह्निकान्त्या शास्त्रकृतः कांत्या इंदुतुल्यास्येत्यपि वकुं शक्यत्वात्

भ्यामुक्तं भवति ८ तडिदित्यादीन्युदाहरणानि अर्थतो व्याचष्टे उपमेयादीनामिति वस्तुतो लाघवात्पूर्णाभिन्नत्वं लक्षणं बोध्यं लक्षणवाक्यगतं क्रममुपेक्ष्योदाहर णक्रमानुसारेण विभागं दर्शयति यथेत्यादिवाचकलुप्तेति वाचकत्वं चात्रानुपूर्वीविशेषवत्तया उपमाबोधने निरूढत्वं तच्च शक्त्यानिरूढलक्षणया वा तत्राद्यमिवादे र्द्वितीयं तु सुहृत्पदादेरिति तदभावात्तडिद्गौरीत्यादौ वाचकलोपः समासानुशासनेन निरूढलक्षणावगमेपि अन्वयबोधे विशेषवत्तया शब्दविशेषस्य तदबोधकत्वात् शास्त्र

॥

कर्पूरंतीसत्रेति अत्र सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्य इत्यनेन विहितः क्विप् लुप्तोपि स्मर्यमाणो धर्ममात्ररूपं आचारं बोधयति कर्पूरपदं च लक्षणया कर्पूरसादृश्यं तस्य चातिरिक्तत्वे पूर्ववत्प्रयोजकतासंसर्गेणाचारेन्वयो धर्मरूपत्वेन भेदेन वस्तुतस्तु क्विप्लोपाप्रतिसंधानेपि तथा बोधात् कर्पूरादिशब्दा एव कर्पूरादिसादृश्यप्रयोजकाभिन्नं तत्सादृश्याभिन्नं वाचारं लक्षयंतीति पुक्तं न तु वाचकस्येवादेरनुपादानाल्लोपो युक्तः साधारणधर्मस्य त्वाचाररूपस्य क्विबुपात्ततया कथं लोप इत्यत आह कर्पूरवदानंदात्मकाचारार्थस्य क्विप इति कर्पूरस्येवेतीवार्थवतिः आनंदात्मकः जनकतासंबंधेन वस्तुगता आनंदस्वरूपो य आचारस्तद्बोधकस्येत्यर्थः ननु क्विप्लोपाज्ञानेप्याचारप्रतीतेः कर्पूरादिपदानामेव तद्बोधकत्वपक्षे कथं धर्मलोपः संगमनीय इति चेत् अत्र प्राचः एवमपि तद्वाचकतया विहितस्य क्विपो लोपात्तल्लोपव्यपदेशः अत एवात्र समानार्थकः क्यच् नोपात्तः तस्यालुप्तत्वादित्याहुः नव्यास्तु धर्ममात्ररूपस्याचारस्योपादानेपि आनंदत्वादिना विशेष

कर्पूरंतीत्यत्र धर्मवाचकलोपः कर्पूरमिवाचरंतीत्यर्थे विहितस्य कर्पूरवदानंदात्मकाचारार्थकस्य क्विप इवशब्देन सह लोपात् अत्र धर्मलोप ऐच्छिकः नयनयोरानंदात्मकतया कर्पूरंतीति तदुपादानस्यापि संभवादिति कांतास्मरवधूयंतीत्यत्र वाचकोपमेयलोपः अत्र कांत्येति विशेषणसामर्थ्यात्स्वात्मानं कामवधूमिवाचरंतीत्यर्थस्य गम्यमानतया स्वात्मन उपमेयस्य सहोपमावाचकेनानुपादानात् स त्वैच्छिकः स्वात्मानं स्मरवधूयंतीत्युपमेयोपादानस्यापि संभवात्

रूपेणानुपादानाद्धर्मलोपो युक्त एव अन्यथा इंदुतुल्यास्येत्यादेर्धर्मलुप्तोदाहरणस्यासंगतत्वापत्तेः न चैवं क्यजादावपि धर्मलुप्तास्यादिति वाच्यं इष्टापत्तेरित्याहुः स्मरवधूयंतीत्यत्रेति ननूपमानादाचार इति कर्मभूतादुपमानादाचारे क्यचो विधानात्स्मरवधूं रतीमिवाचरंतीत्यवगमेप्यात्मानमन्यां वेति कथं निर्णयस्तत्राह विशेषणेति स्वानुरूपाचरणस्य कांतिकरणकत्वरूपविशेषणसामर्थ्यादित्यर्थः कांतेः स्वरसतः स्वीयत्वावगमादिति भावः न चात्मन उपमेयस्य तन्वीपदेनोपादानात्कथं लोप इति वाच्यं तस्या द्वितीयान्ततया कर्मभूतोपमेयासमर्पकत्वात् आत्मानमित्यध्याहृतेनैव तद्बोधात् अत्र स्मरवधूपदेन स्मरवधूसादृश्यं लक्ष्यते तस्य च प्रयोजकत्वसंसर्गेणाभेदेन वाचारेन्वयः तथा च स्मरवधूसादृश्याभिन्नात्मकर्मको य आचारस्तदाश्रयस्तन्वीति बोधः॥

काकतालीयेति वृत्तिविषये समासविषये ज्ञापकादिति इवार्थसमासाभावे तद्विषयादित्यनेनेवार्थविषयसमासानुवादोऽनुपपन्नस्तन्नज्ञापकइत्यर्थः उभयत्र काकागमनतालपतनयोः उपमेयमित्यनंतरं क्रमेणेतिशेषः तेनेति काकतालसमवेतक्रियापरयोःकाकतालपदयोरिवार्थसमासेनेत्यर्थः काकतालसमागमेति अयंभावः काकागमनतालपतनयोरुपमानत्वेतदुपमेययोःस्वीयागमनतन्व्यवस्थानयोः पृथगनुपातत्वेनोपमेयतयान्वयायोगात्काकतालसमागम एवोपमाने दस्यंचकाकतालसमागमसदृशंकाकतालपदार्थस्तस्यचाभेदेनस्वीयतन्वीसमागमरूपेउपमेयेऽन्वयइति ततइति तादृशसमासोत्तरमित्यर्थः इतितदर्थइति काकतालपदलक्षितस्यकाककृततालफलोपभोगसदृशस्याभेदेनतन्वीरतिलाभरूपेणोपमेयेनान्वयादितिभावः अत्रपतनदलितमितिरहोदर्श

काकतालीयमित्यत्रकाकतालशब्दौवृत्तिविषयेकाकतालसमवेतक्रियावर्तिनौतेनकाकागमनमिवतालपतनमिवकाकतालमितीवार्थेसमासात्तद्विषयादितिज्ञापकात्समासः उभयत्रोपमेयंस्वस्यक्वचिद्गमनंतत्रैवरहसितन्व्या अवस्थानंचतेनस्वस्यतस्याश्चसमागमः काकतालसमागमसदृशइतिफलति ततःकाकतालमिवकाकतालीयमितिद्वितीयस्मिन्निवार्थेसमासात्तद्विषयादितिसूत्रेण इवेप्रतिकृतावितिस्वप्रिकारस्थेनछप्रत्ययः तयाचपतनदलितंतालफलंयथाकाकेनोपभुक्तमेवंरहोदर्शनक्षुभितत्दयातन्वीस्वेनोपभुक्तेतितदर्थः तत्रचात्रकाकागमनतालपतनसमागमरूपस्यकाककृततालफलोपभोगरूपस्यचोपमानस्यानुपादानात् प्रत्ययार्थोपमायामुपमानलोपः समासार्थोपमायांवाचकोपमानलोपः सर्वोप्ययंलोपश्छप्रत्ययविधायकशास्त्रकृतः १ नक्षुभितत्दयेतिचविंवप्रतिविंवभावापन्नधर्मस्वरूपकथनेनत्वेवमन्वयाकारइतिबोध्यंनचसकृदुच्चरिताभ्यांकाकतालपदाभ्यांकथमुपमानद्वयावगमइतिवाच्यमनुभवानुसार्यनुशासनेनव्युत्पत्तिवैचित्र्यस्यस्फुटंप्रतिपत्तेरिति एवंदुरूहत्वात्सर्वंग्रंथमारभ्यात्रोपमानलुप्तादौश्वतुरोपिभेदानदर्शयितुमाहतत्रश्वेति काकागमनेत्यादि काकागमनतालपतनरूपयोःसमागमस्तद्रूपस्येत्यर्थः इदंचकाकागमनमिवतालपतनमिवेतिमहाभाष्यगतविग्रहवाक्यविरोधशंकापरिहारायोक्तं समागमस्यतादृशक्रियाद्वयाभिन्नत्वेनोक्तत्वात्सोक्तार्थएवपर्यवसानात् विशिष्टोपमायांविशेषणोपमावगतिवत्समागमोपमायामपितदवयवक्रिययोर्यायोगंगम्यमानामुपमामभिप्रेत्यमहाभाष्यकृतातादृशविग्रहतात्काकतालीयमित्याद्याशयः

धर्मस्यानुपादानइति तत्स्थाने अभवत्किं ब्रवीमितेइति पाठइतिभावः इति श्रीमत्तत्पुरुषरामभट्टसूरिवरात्मजवैद्यनाथविरचितायामलंकारचंद्रिकाख्यायांकुव
लयानंदटीकायामुपमाप्रकरणं संपूर्णं यद्यप्युपमानरूपणानंतरं तन्मूलालंकारेषु संभवत्सादृश्याउपमेयोपमैव प्रथमं निरूपयितुमुचितानत्वारोपितसादृश्य
निबंधनोनन्वयस्तथापितद्द्वितीयसदृशव्यवच्छेदफलकतया तृतीयसदृशव्यवच्छेदफलिकामुपमेयोपमामपेक्ष्यशीघ्रोपस्थितिकमभिप्रेत्यप्रथमं निरूपयतिउ
पमानोपमेयत्वमितिउपमानत्वमुपमेयत्वंचेत्यर्थः द्वंद्वांतेश्रूयमाणत्वात् विवक्ष्यतइति विशेषः एवंचैकस्यैववस्तुनोयदुपमानत्वमुपमेयत्वंचविवक्ष्यतेतद
नन्वयइत्यन्वयः असंभवशंकानिरासायमध्येउदाहरणोक्तिः ननूक्तलक्षणस्यभणितिस्विमतिर्मेतिरिवचेष्टत्यादिरशनोपमायामतिव्याप्तिः तत्रमत्सादेरेक

अवितर्कितसंभवमिति साधारणधर्मस्यानुपादाने मत्ययार्थोपमायांधर्मोपमानलोपः मम्मासार्थोपमायांधर्मोपमानवाचकलोपः
इतिसूक्ष्मधियादृष्टावधारितव्यं एतेषामुदाहरणांतराणिविस्तरभयान्नलिख्यंते उपमानोपमेयत्वेयदेकस्यैववस्तुनः इंदुरिंदुरिव
श्रीमानिस्यादौतदनन्वयः ॥ एकस्यैववस्तुनउपमानोपमेयत्ववर्णनमनन्वयः वर्ण्यमानमपिस्वस्यस्वेनसाधर्म्येनान्वेतीतिव्युत्पत्तेः
अनन्वयिनोप्यर्थस्याभिधानं सदृशांतरव्यवच्छेदेनानुपमत्वद्योतनायेंदुरिंदुरिवश्रीमानित्युक्तेश्रीमत्वेनचंद्रस्यनान्यःसदृशोऽस्तीतिस

स्यैववस्तुनउपमानत्वस्योपमेयत्वस्यचवर्णनान् अथैकस्यवस्तुनोपदेकनिरूपितमुपमानत्वमुपमेयत्वंच
तिविवक्षितं एकपदस्यावृत्तिकल्पनात् इत्थंचरशनोपमायांमत्यादेश्चेष्टादिनिरूपितमुपमानत्वं भणित्यादिनिरूपितंतूपमेयत्वमित्येकनिरूपितोपमानोपमेय
त्वविरहान्नातिव्याप्तिरित्युच्यते तदाखमिवजलं जलमिवखमित्युपमेयोपमायामतिव्याप्तिः तत्रैकस्यैववस्तुनोगगनस्य एकजलनिरूपितस्योपमानत्वस्योपमे
यत्वस्यचवर्णनादितिचेन्मैवं एकस्यैवेतिविरोधद्योतकैवकारबलेनस्वाश्रयनिरूपितयोरुपमानोपमेयत्वयोर्लाभेनक्वाप्यतिप्रसंगाभावात् अस्तिहिइंदुरिंदु
रिवेत्यनन्वयेउपमानत्वमुपमेयत्वंचस्वाश्रयेंदुनिरूपितंनतुरशनोपमायामुपमेयोपमायांवेतिसंक्षेपः अनन्वयपदप्रवृत्तिनिमित्तमाह वर्ण्यमानमपीति ना
दृशांतरव्यवच्छेदोलक्ष्यते ॥ ८ ॥
[redacted]

उ॰ टी॰
चं॰
६

नन्वेवं सत्यसंबद्धप्रलापत्वापत्तिरित्यत आह अनन्वयिनोपीति बाधितस्यापीत्यर्थः अर्थस्य साधर्म्यस्य अभिधानं आहार्यारोपरूपतया प्रतिपादनं सदृशांतरव्यवच्छेदेन सदृशांतरस्य । इति बोधद्वारेण एतदेव विशदयति इंदुरित्यादिना इत्थं च सदृशांतरव्यावृत्तिसूचनद्वारानुपमत्वद्योतनरूपप्रयोजनवत्वाद्यापाततो रुद्वरोदनार्थवादवत् द्वारमात्रतया साहृश्यप्रतिपादनेपि नासंबद्धप्रलापतापत्तिरिति भावः उदाहरणांतरमाह यथा वेति गगनाकारं गगनसदृशं इवेत्यतः प्राक् युद्धमित्यध्याहार्यं उदाहरणांतरप्रदर्शने बीजमाह पूर्वोदाहरणेति वैपुल्यादेरित्यादिपदात् गांभीर्यदारुणत्वयोः संग्रहः इत्यनन्वयप्रकरणं अथोपमेयोपमां लक्षयति पर्यायेणेति अयोगपद्येनेत्यर्थः वाक्यभेदेनेति यावत् तत उपमानोपमेयत्वं विवक्ष्यतद्वृत्तिशेषोत्रापि बोध्यः उपमेयोपमेति लक्ष्यनिर्देशः उपमेयेनोपमेति व्युत्पत्तेः धर्मोर्थ इवेत्युदाहरणं अर्थोधनं पूर्णश्रीः पूर्णसमृद्धिः अत्र च धर्मार्थयोर्द्वयो र्वाक्यभेदेन उपमानत्वमुपमेयत्वं च वर्णितं तत्राद्यवा

ततश्चस्वेनापि साहृश्यासंभवादनुपमत्वेपर्यवसानं यथा वा गगनं गगनाकारं सागरः सागरोपमः रामरावणयोर्युद्धं रामरावण
योरिव पूर्वोदाहरणे श्रीमत्वस्य धर्मस्योपादानमस्ति इह तु गगनादिषु वैपुल्यादेर्धर्मस्य तन्नास्तीति विशेषः पर्यायेण द्वयोस्तच्चेदुप
मेयोपमा मता धर्मोर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि १२ द्वयोः पर्यायेणोपमानोपमेयत्वकल्पनं तृतीयसदृशव्यवच्छेदार्थं ॥

क्येर्थस्योपमानत्वं धर्मस्योपमेयत्वं द्वितीये तु तद्विपर्यासेन धर्मस्योपमानत्वमर्थस्योपमेयत्वमिति लक्षणसमन्वयः उपमानोपमेयत्वमात्रोक्तावनन्वयेऽतिव्याप्तेर्द्वयोरित्युक्तं एवमपि समत्वं शरदि प्रादुरहात् कुमुदतारकाद्युभयविश्रांतसादृश्यायामुपमायामतिव्याप्तिः तत्र द्वयोः कुमुदतारकयोः सादृश्याश्रयत्वरूपोपमेयत्वस्यैवक्तव्यति योगित्वरूपस्योपमानत्वस्याप्यर्थतः प्रतीतेरतः पर्यायेणेत्युक्तं ननु भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमलेति रशनोपमायामितिव्याप्तिः तत्र द्वयोर्मतिचेष्टयोर्वाक्यभेदेनोपमानोपमेयत्ववर्णनादिति चेत् न द्वयोरित्यनेन परस्परमुपमानोपमेयत्वस्य विवक्षितत्वात् अन्यया पर्यायपदेनैवानन्वयवारणे तद्द्वैयर्थ्यापत्तेरिति संक्षेपः ननूपमाप्रतीयोभयरूपाया उपमाद्वयरूपाया वा उपमेयोपमाया अलंकारांतरत्वे किं बीजमित्यत आह द्वयोरिति तया वाध्यविशेषद्योतकतयाचमत्कृतिवैलक्षण्यमेवतत्र बीजमिति भावः ॥ ❀ ॥ ❀ ॥ ८ ॥

कथं तृतीयसदृशाव्यवच्छेदलाभस्तत्राह धर्मार्थयोरितिधर्मार्थयोर्मध्य इत्यर्थः मुखतः शब्देन तथा च प्राप्तस्य पुनर्वचनं तदितरपरिसंख्यार्थमिति न्यायादिहापि ततो ऽन्यसदृ
शाव्यावृत्तिलाभ इति भावः खमिवेति शरद्वर्णनमिदं खमाकाशमिव जलं कालुष्यापगमेन निर्मलत्वातिशयात् शेषं स्पष्टं निर्मलत्वादीत्यादिपदेन शैत्यातिशयपरिग्रहः
गिरिरिवेति अत्र गजः प्रकृतः अयमिति प्रकृतपरामर्शिसर्वनामनिर्दिष्टत्वात् अत एवोपक्रमादग्रे ऽप्यस्य मदधारेत्यन्वयो बोध्यः अत्र पूर्वार्धे उच्चकैर्विभातीति समान
धर्म उपात्तः उत्तरार्द्धे च स्रवतीति स उक्त इति दिक् इत्युपमेयोपमाप्रकरणं प्रतीपमिति लक्ष्यनिर्देशः १३ ननूपमानोपमेयभावस्य वैवक्षिकतया मुखादेरप्युपमा
नत्वसंभवाच्चंद्र इव मुखमित्युपमायामतिव्याप्तिरित्यत आह प्रसिद्धेति प्रसिद्धोपमानस्य उपमेयभावः उपमेयत्वं प्रतीपं प्रतीपपदवाच्यं कुतः प्रातिलोम्यात् प्रसिद्धोप

धर्मार्थयोः कस्यचित्केनचित्सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदं फलति यथा वा खमिव ज
लं जलमिव खं हंस इव चंद्रश्चंद्र इव हंसः कुमुदाकारास्तारास्ताराकाराणि कुमुदानि पूर्वत्र पूर्णाश्रीरिति धर्म उपात्तः इह निर्मलत्वादिधर्मो नोपात्त इति भे
दः उदाहरणद्वये ऽपि प्रकृतयोरेवोपमानोपमेयत्वकल्पनं शशिधर्मार्थसमृद्धेः शरदि गगनसलिलादिनैर्मल्यस्य च वर्णनीयत्वात् प्रकृताप्रकृत
योरप्येषा संभवति यथा गिरिरिव गजराजो ऽयं गजराज इवोच्चकैर्विभाति गिरिः निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति प्रतीपमुपमानस्यो
पमेयत्वप्रकल्पनं त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः १३ प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात्प्रतीपं नानप्रतिकूलत्वात् उपमेयभावप्रातिलोम्या
दित्यविसर्गपाठे ऽप्रसिद्धोपमानस्य य उपमेयभावस्तस्य प्रातिलोम्यादुपमानप्रतिकूलत्वादुपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यत इति व्याख्येयं न तु प्रसिद्धस्योपमा
नोपमेयभावस्य वैपरीत्यादिति यथाश्रुतरीत्या एवंविधप्रातिलोम्यस्य तृतीयपंचमप्रतीपभेदाव्याप्तित्वेन प्रतीपपदप्रवृत्तिनिमित्तत्वायोगादिति एवं चोक्तप्रकारेणो
पमानप्रातिपक्षकूल्यास्य प्रतीपपदप्रवृत्तिनिमित्तत्वकथनेन प्रसिद्धोपमानप्रतिकूलधर्मः प्रतीपमिति प्रतीपपंचकसाधारणं सामान्यलक्षणमिति सूचितं अत एव प
चमप्रतीपव्याख्यानावसरे वक्ष्यति उपमानप्रातिलोम्यादिति प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वं एतस्य च सकलप्रतीपभेदसाधारण्यं तत्रतत्र स्फुटीकरिष्यते य
थावेति प्रोषितस्य प्रियां प्रति वियोगवेदनानिवेदनमिदं अयि प्रिये त्वदीयसादृश्येन तु विनोदनं विनोदो विरहयापनं तन्मात्रमपि मम दैवेन न क्षम्यते एतदेव दर्शयति

कु॰ टी॰ त्वन्नेत्रयोः समानासाधारणीकांतिः शोभायस्यतथाविधंयदिंदीवरंतत्सलिलेमग्नं वर्षर्तुनाजलहृदैः नवसुखस्यच्छायायाकांत्या अनुकारीसदृशः त्वाशोभमेघैरंतरितः
चं॰ स्तिरोहितःयेपांत्वयिभिन्नक्रमः त्वद्गमनसदृशागतयोयेराजहंसास्तेपिगताइति अत्रकांतीत्यादिधर्मोपादानात्पूर्वोदाहरणंवैलक्षण्यंबोध्यं ननूपमानादुपमे
१ यस्याधिक्यवर्णनारूपात्व्यतिरेकालंकारादस्यकोभेदः उच्यते तत्रवैधर्म्यप्रयुक्तमुपमेयस्याधिक्यंविवक्षितमिहतूपमानतामात्रप्रयुक्तत्वात्साधर्म्यप्रयुक्तमि
ति प्रतीपांतरमाह अन्योपमेयेति अन्यदवर्ण्यंउपमानंतद्रूपंयदुपमेयंतस्यलाभेनवर्णनीयस्यमुखादेरनादरोगर्वपरिहारोपितत् प्रतीपमित्यर्थः तस्यगर्वप्र
सक्तिपूर्वकत्वेनोपमेयतायाः अपिपूर्वमप्राप्त्याउपमानतिरस्कृतिविशेषप्रयोजकत्वादितिभावः अतएवलाभेनेत्युक्तंनतुसत्वेनेति अप्राप्तप्राप्तेर्लाभशब्दार्थत्वा

यथावा यत्वन्नेत्रसमानकांतिसलिलेमग्नंतदिंदीवरंमेघैरंतरितःप्रियेत्वत्मुखच्छायानुकारीशशी येपित्वद्गमनानुसारिगतयस्तेराजहंसागता
स्त्वत्सादृश्यविनोदमात्रमपिमेदैवेननक्षम्यते अन्योपमेयलाभेनवर्ण्यस्यानादरश्चतत् अलंगर्वेणतेवक्रकांत्याचंद्रोपितादृशः१४ असु
त्कृष्टगुणतयावर्ण्यमानस्यान्यत्रस्वसादृश्यमसहमानस्योपमेयंकिंचित्प्रदर्श्यतावतातस्यतिरस्कारोद्वितीयंप्रतीपंपूर्वस्मादपिविच्छित्तिवि
शेषशालि यथावागर्वमसंवाह्यमिमंलोचनयुगलेनकिंवहसिभद्रे संतीदृशानिदिशिदिशिसरस्सुननुनीलनलिनानिवर्ण्योपमेयलाभे
नतथान्यस्याप्यनादरः कःक्रौर्यदर्पस्तेमृत्योत्वत्तुल्याः संतिहिस्त्रियः १५ असुत्कृष्टगुणतयाक्वचिदप्युपमानभावमसहमानस्यावर्ण्यमुप
मेयंपरिकल्प्यतावतातस्यतिरस्कारः पूर्वप्रतीपवैपरीत्येनतृतीयंप्रतीपं यथावा अहमेवगुरुः सुदारुणानामितिहालाहलमास्मतात

न्विच्छित्तिविशेषेति चमत्कारोत्कर्षेत्यर्थः उत्करोस्योपमानतिरस्कारातिशयप्रतीतेरितिभावः गर्भमिति असंवाह्यं संवहनायोग्यं अपरिमितमितियावत् भ
द्रेशोभनेइतिसंबोधनंनन्वितिहेत्वर्थे अमयानामनेकार्थत्वात् पूर्वोदाहरणेकांत्येतिसमानधर्मोपादानमिहतुनेतिभेदः वर्ण्योपमेयेति अन्यस्यावर्ण्यस्य अना
दरोपितथाप्रतीपमित्यर्थः अहमेवेतिसुदारुणानामतितीव्राणांगुरुः श्रेष्ठः तातेतिसानुकंपसंबोधने मास्मदृप्यइतिदर्पमाकृथाइत्यर्थः वर्ण्येनान्यस्येति निरू
पितत्वंतृतीयार्थः वर्ण्यनिरूपितायान्यस्यावर्ण्यस्योपमातस्याइत्यर्थः अनिष्पत्तिवचः उपमानाअनिष्पत्तिःकदभिहितइतिन्यायात् तत्प्रतीपंमुधेति किं तितृती

ॐ यांत्वन्मुखानमेवुजमितिवातोमुधानिघ्नयोजनोऽपवादः

अलीकार्थकत्वेनापवादस्य निष्प्रयोजनत्वं उत्कर्षेति उपमानतिरस्कारातिशयप्रयोजकत्वरूपेत्यर्थः मुधापवादलोकेति उक्तार्थमेतत् आकर्णयेति वचनीयं अली
कतया निंदितं अतएव भुवीत्युक्तं लोकांतरे मुखासन्निधानेन विशेषादर्शनादलीकत्वग्रहायोगात् संनिधानेपि विशेषाग्रहणात्पामरैरित्युक्तं अत्र वचनीयं पाम
रैरित्येताभ्यामुपमितेरनिष्पत्तिः प्रकाश्यते प्रतीपमितिकः अर्थः प्रयोजनं यस्य तत्तथा अनर्थकमिति यावत्तस्य भावः कैमर्थ्यं तदपि प्रतीपं मन्वते आलंकारिका इति शे
षः ननूपमानस्य पद्मचंद्रादेराह्लादविशेषरूपप्रयोजनसत्त्वात्कथमनर्थकत्वमत आह उपमेयस्येवेति उपमानपूर्वहत्वेन उपमानकार्यकारित्वेन अयं चोपमानकै
मर्थ्ये हेतुः अतश्चोपमानकैमर्थ्यमित्यध्याहार्यं आह्लादविशेषादेरन्यलभ्यत्वेन प्रयोजनत्वासंभवात्कैमर्थ्यमिति भावः उपमानप्रयोजकपूर्वहत्वेनेति पाठे उपमानप्र

ननु संति भवादृशानि भूयो भुवनेस्मिन्वचनानि दुर्जनानां वर्ण्यनान्यस्योपमाया अनिष्पत्तिवचश्च नत् मुधापवादो मुग्ध्याक्षि तन्मुखाभं कि
लांबुजं १६ अवर्ण्यवर्ण्योपमित्यनिष्पत्तिवचनं पूर्वेभ्य उत्कर्षशालि चतुर्थं प्रतीपं उदाहरणे मुधापवादलोकोपमित्यनिष्पत्तिरुद्घारि
ता यथा वा आकर्णय सरोजाक्षि वचनीयमिदं भुवि शशांकस्तव वक्त्रेण पामरैरुपमीयते प्रतीयमुपमानस्य कैमर्थ्यमपि मन्वते दृष्टं चेद्व
दनं तस्याः किं पद्मेन किमिंदुना १७ उपमेयस्यैवोपमानप्रयोजनपूर्वहत्वेनोपमानकैमर्थ्यमुपमानप्रातिलोम्यात्स्वचमं प्रतीपं यथा वा तदो
जस स्तस्य शसः स्थिता विमोहयेति वित्तेकुरुते यदा यदा तनोति भानोः परिवेषकैतवात्तदा विधिः कुंडलनां विधोरपि ॥ ८ ॥
योजकं यस्या इति बहुव्रीहिः ननूपमानकैमर्थ्यस्योपमानाक्षेपस्याक्षेप इति वामनसूत्रेणाक्षेपालंकारत्वेनोक्तत्वात्कथं प्रतीपत्वमत आह उपमानप्रातिलोम्यादिति उप
मानप्रतिकूलत्वादित्यर्थः प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वमित्युक्तं तथा च प्रतीपसामान्यलक्षणाक्रांतत्वात्प्रतीपांतर्भाव एवोचित इति भावः तदोजस इति नैयर्थ्या
येनैष वर्णनमिदं विधिर्ब्रह्मा तस्य नलस्योजसः प्रतापस्य तथा शसश्च स्थितौ सत्यां दर्मोः सूर्यचंद्रौ वृथा प्रतापज्योत्स्नादेः कार्यस्य ताभ्यामेवोपपत्तेर्निरर्थकावितिविते
यदा यदा कुरुते तदा भानोर्विधोश्च परिवेषस्य परिधेः कैतवाच्छलात्कुंडलनां वैयर्थ्यसूचिकां रेखावेष्टनां करोतीत्यन्वयः अत्र चनायं परिवेषः किंतु कुंडलनेत्यपह्नु
नो कैमर्थ्यरूपप्रतीपस्यांगत्वात्तयोरंगांगिभावसंकरः संकरः यथा यापमित्या टिवक्त्रतत्पदवीफायाः अकरणं न दोष इति वाच्यं केचिद् इ डि प्रभृतयः

अनन्वयोपमाप्रतीपानामिति प्रतीपपदेन चात्राद्यभेदत्रयमेव गृह्यते न तु त्रयभेदद्वयमपि तत्रोपमितिक्रियानिष्पत्तेरभावेनोपमांतर्भावस्याऽसंभवात् वस्तुतस्त्वा
द्यभेदत्रयस्यापि नोपमांतर्गतिर्युक्ता चमत्कारं प्रति साधर्म्यस्य प्राधान्येनाप्रयोजकत्वात् सा तत्र्यन्निवंधनं उपमानतिरस्कार एव हि तत्र च मत्कृतिप्रयोजकत
याविवक्षितानतु साधर्म्यमेव मुखत चमत्कारितयाविवक्षितमिति सहृदयसाक्षिकं एवमनन्वयोपमेयोपमयोरपि न सादृश्यस्य चमत्कारितया प्राधान्येन
विवक्षा किंतु द्वितीयतृतीयसदृशव्यवच्छेदायापत्तयेति न तयोरप्युपमांतर्गतिर्युज्यते अन्यथा सादृश्यवर्णनमात्रेणोपमांतर्भावे धैर्यलावण्यगांभीर्यप्रमुखैस्त्व
मुदन्वतः गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन तद्व्यतिरेकालंकारस्याप्युपमांतर्गतिः स्यात् तत्र साधर्म्यसमानाधिकरणं वैधर्म्यमेव चमत्कारे प्रधानं न तु साध
र्म्यमिति चेत्तुल्यमिदं प्रतीपादिष्वपीति सहृदयैराकलनीयं एतदेवास्वरसबीजमभिसंधायोक्तं केचिदिति अन्ये वामनादयः अत्र चास्वरसबीजं प्रागेवावेदितं इति
प्रतीपप्रकरणं रूपकं लक्षयति विषय्यभेदेति रूप्यते इतरव्यावृत्ततया ज्ञायते धर्मी अनेनेति रूपं तत् रूपमस्यास्तीति तद्रूपस्तस्य भावस्ताद्रूप्यं चंद्रकार्यकारित्वादि विष

केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेन तदंतर्भावं मन्यंते अन्ये तु पंचमं प्रतीपप्रकारं उपमानाक्षेपरूपत्वादाक्षेपालंकारमाहुः
विषय्यभेदताद्रूप्यरंजनं विषयस्य यत् रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः १८

यिण उपमानस्य अभेदताद्रूप्याभ्यां विषयस्योपमेयस्य यत्
रंजनमिव रंजनं स्वोपरक्तबुद्धिविषयीकरणमिति यावत् तद्रूपकमित्यर्थः रूपकं तदित्येव पाठः रूपकं त्विति पाठे तु तदित्यध्याहार्यं उपात्तबिंबाविशिष्टविषयधर्मिकाऽ
हार्यारोपनिश्चयविषयीभूतं उपमानाऽभेदताद्रूप्यान्यतरत् रूपकमिति तु निष्कर्षः मुखं चंद्र इत्यादौ नामार्थयोरभेदान्वयव्युत्पत्तिवशादाहार्यचंद्राभेदनिश्चयात्ल
क्षणासमन्वयः मुखमपरश्चंद्र इत्यत्र तु न चंद्राभेदो विषयः अपर इति भेदस्य विवक्षितत्वात् अपि तु चंद्रकार्यकारित्वरूपं ताद्रूप्यमिति तत्रापि लक्षणसंगतिः न
च तस्य मुखे सत्त्वात्कथमारोप इति वाच्यं चंद्रकार्यसजातीयकारित्वस्यैव मुखे सत्त्वादिति यद्यपि नामार्थयोरभेदान्वयानुरोधादिहापि चंद्रपदलक्षितस्य तत्कार्यकारिणो
ऽभेदसंसर्गेणैव मुखेऽन्वयादभेदरूपकमेव तथाप्युपमानतावच्छेदकरूपेणाभेदभानेऽभेदरूपकत्वं तत्कार्यकारित्वादिरूपेणाभेदभाने तु ताद्रूप्यरूपकत्वमिति तात्प
र्यं अत्र कमलमनंभसि कमले च कुवलये तानि कनकलतिकायामित्याद्यतिशयोक्तिवारणायोपात्तेति विषयविशेषणं आरोपश्च निषेधानंगकत्वेन विशेषणीयः तेनापह्नु
तौ नातिव्याप्तिः भ्रांतिनिवारणायाहार्येति तत्पादनखरत्नानां यदलक्तकमार्जनं इदं श्रीखंडलेपेन पांडुरीकरणं विधोरिति निदर्शनाकांक्षणार्य

बिंबाविशिष्टेति संशयोल्लेखे यो निरासाय निश्चयेत्युक्तेमिति संक्षेपः

आधिक्येत्यादि आधिक्यमुपमानस्य स्वाभाविकीमवस्थामपेक्ष्योपमेयतादात्म्यावस्थायां वोध्यं एवं न्यूनत्वमपि अनुभयं आधिक्यन्यूनत्वोभयरहितं अभेदताद्रूप्या
न्यतरमात्रं अयंहीत्यादि अयं वर्ण्यमानो राजापि रहेतुना पुनः नगरं शिवस्यापि त्रिपुरदग्धृत्वात्स एवायमिति भावः तार्तीयीकमिति तृतीयमेव तार्तीयीकं ती
यादीकक स्वार्थे वाच्य इति वार्त्तिकानुसारात् विलोचनेत्यादिनेत्यन्वयः १९ शंभुरिति अनाप्यमित्यनुषंजनीयं अन्यथाऽतिशयोक्त्यापत्त्या रूपकोदाहरणत्वासंग
तेः अपराजभावावस्थायां समदृष्टिता समसंख्यलोचनता एकरूपलोचनवत्ता च मुखेंदुनेति अत्रेंदुपदमिंदुकार्यकारिपरं किमिंदुनेति प्रसिद्धचंद्राद्भेदविवक्ष
णात् अतश्चेंदुताद्रूप्यरूपकमिदं न च नोत्तरपदार्थप्राधान्यादिंदुकारिणि मुखाभेदभानान्मुखाभेदरूपकं स्यात् न तु चंद्रताद्रूप्यरूपकमिति वाच्यं मुखमिंदुरिवेति वि
ग्रहे मुखस्य स्वनिष्ठाभेदप्रतियोगित्वसंसर्गेणान्वयाभ्युपगमात् विशेषणानुयोगिकस्यापि विशेष्यसंबंधतायाः स्वामित्वस्य षष्ठ्यर्थत्ववादिभिः प्राचीनैश्चैत्र

अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् अयमास्ते विना शंभुस्तार्तीयीकं विलोचनं १९ शंभुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टितां अ
स्यामुखेंदुना लब्धे नेत्रानंदे किमिंदुना २० साध्वीयमपरा लक्ष्मीरसुधासागरोदिता अयं कलंकिनश्चंद्रान्मुखचंद्रोऽतिरिच्यते २१ विषय्युप
मानभूतपद्मादिविषयस्तदुपमेयं वर्णनीयमुखादि विषयिणो रूपेणाविषयस्य रंजनं रूपकं अन्यरूपेण रूपवतः करणात्तच्च क्वचित्प्रसिद्धे
विषय्यभेदपर्यवसिते क्वचिद्भेदे प्रतीयमान एव तदीयधर्मारोपमात्रपर्यवसिते ततश्च रूपकं तावद्द्विविधं अभेदरूपकं ताद्रूप्यरूपकं चे
ति द्विविधमपि प्रत्येकं त्रिविधं प्रसिद्धविषय्याधिक्यवर्णनेन न्यूनत्ववर्णनेनानुभयोक्त्या चैवं रूपकं षड्विधं ॥ स्यधनमित्यादावंगीकारात् एवंच

मुखनिष्ठभेदप्रतियोगी चंद्रस्तत्कार्यकारी वेति बोधात्र मुखाभेदरूपकापत्तिः मुखप्रतियोगिकाभेदस्याभानादिति एवमन्यत्रापूह्यं २० असुधेति सुधासागरा
दुदितां उत्पन्नाप्रसिद्धा लक्ष्मीः इयं तु न तथेति न्यूनत्वोक्तिः अतिरिच्यत इति निष्कलंकतयाधिकोभवतीत्यर्थः २१ लक्षणश्लोकं व्याचष्टे विषय्युपमानेत्यादि
विषयिणोऽभेदेन रूपेण चेति पाठः रूपेण अहृद्यकलादिना ताद्रूप्येण क्वचित्ताद्रूप्येण चेत्येव पाठः परमार्थतस्तु प्रामाणिकपुस्तकेषु विषयिणो रूपेणाविषय
स्यरंजनमिति युक्ततरः पाठः तेन तच्चेत्यादेर्न पौनरुक्त्यमिति ध्येयं हरिद्रादिना पटादिरंजने प्रयुक्तस्य रंजनशब्दस्येह प्रवृत्तौ बीजमाह अन्यरूपेणेति रूपं रूपो
तादिकं अभेदताद्रूप्यान्यतयाऽन्यदीयधर्मेणान्यस्य तद्वत्तासंपादनं तस्मात् मान्यादिह गौण्या रंजनशब्दप्रयोग इति भावः तच्चेति रंजनं चेत्यर्थः प्रसिद्धे

कु॰टी॰ रूपपदस्याभेदत्तादूप्योभयसाधारणत्वादितिभावः अभेदेनरूपेणचेतिपाठेतु तत्त्वेतत्र्वपाद्वोहेत्वर्थकः तेनपूर्वोक्तस्यैवसमर्थनमिति नपौनरुक्त्यं नावत् विधान्तरो
चं॰ क्तेः प्राक्‌उद्देशक्रमप्रातिलोम्येनेति निर्देशक्रमवैपरीत्येनेत्यर्थः एतदेवविशदयति येनेत्यादि विशेषणेनेतिहेतौतृतीया पुरदग्धृत्वविशेषणहेतुकशिवाभेदानु
८ रंजनादित्यर्थः ननुन्यूनत्ववर्णनेभेदायकर्षयोः प्रतीतेः कथंचमत्कारित्वमत आह अभेददार्ढ्यापादकत्वादिति विशेषनिषेधस्यशेषाभ्यनुज्ञाफलकत्तयानेषिद्धत्वमिति
दितिसकलगुणशालितापतीतावेकदेशविकृतमनन्यवद्भवतीतिन्यायेनाभेदनिश्चयंसंपादकेत्यादित्यर्थः विभावनात् प्रकाशनात् चंद्रज्योत्स्ने ति राजानंप्रतिक्रस्य
अयंहीत्यादिसार्धश्लोकेनाभेदरूपकाणि अस्यामुखेंदुनेत्यादिसार्धश्लोकेनताद्रूप्यरूपकाणि आधिक्यन्यूनत्वानुभयोक्त्युद्देशक्रमप्रातिलोम्ये
नोदाहृतानि येनदग्धाइतिविशेषणेनवर्णनीयराज्ञिप्रसिद्धशिवाभेदानुरंजनाच्छिवस्यपूर्वावस्थातोवर्णनीयराजभावावस्थायांन्यूनत्वाधिक्य
योरवर्णनाच्चानुभयाभेदरूपकमाद्यं तृतीयलोचनप्रहाणोक्त्यापूर्वावस्थातोन्यूनताप्रदर्शनात्तन्न्यूनाभेदरूपकं द्वितीयंन्यूनत्ववर्णनमपिअभेददा
र्ढ्यापादकत्वाच्चमत्कारिविषमदृष्टित्वपरित्यागेनजगद्रक्षकत्वोक्त्याशिवस्यपूर्वावस्थातोवर्णनीयराजभावावस्थायांउत्कर्षविभावनादधिकाभेदरू
पकंतृतीयमेवमुत्तरेष्वताद्रूप्यरूपकोदाहरणेष्वपिक्रमेणानुभयन्यूनाधिकभावाउन्नेयाः अनेनैवक्रमेणोदाहरणांतराणि चंद्रज्योत्स्नाविशदपु
लिनेसैकतेस्मिन्शरय्वावादद्यूतंचिरतरमभूत्सिद्धयूनोः कयोश्चित् एकोवक्तिप्रथमनिहतंकैटभंकंसमन्यस्तत्त्वंसत्त्वंकथयभगवन्कोहतस्तत्रपू
र्वं अत्रसत्वमित्यनेनयः कंसकैटभयोर्हंतागरुडध्वजस्तत्तादात्म्यंवर्णनीयस्यराज्ञः प्रतिपाद्यतेप्रतिकंसकैटभवधयोः पौर्वापर्यप्रश्नव्याजेनतत्ता
चिद्रुक्तिः हेभगवन् चंद्रज्योत्स्नावत्‌विशदंस्वेतंपुलिनंयस्यतथाभूतेऽस्मिन्शरय्वाःशरयूनामकनद्याःसैकतेसिक॥ दातपदार्थकरणात्पूर्वावस्थातउत्कर्षापकर्षयोरवि
तामयदेशकयोश्चित्सिद्धतरुणयोः चिरतरंअतिचिरकालंवादरूपंद्यूतमभूत्कीदृक्‌तत्राह एकःसिद्धयुवाकैटभंदैत्यविशेषंप्रथमंनिहतंवक्तिवदतिअन्यःकंसंप्रथमंनिहत
तंवक्तिसःकंसकैटभयोर्निहंतात्वंतत्रतयोर्मध्येपूर्वंकोहतइतितत्कथयेत्यन्वयः यद्यपिमुनिप्रभृतादेवभगवन्नित्यामंत्रणमुचितंनराजादौतथापिराज्ञोभगवत्तादात्म्यवर्णना
दनौचित्यंपरिहरणीयं क्वचित्तुभवनेतिपाठः अत्रज्योत्स्नापदेनैवचंद्रिकालाभेपिचंद्रपदंशारदपूर्णचंद्रपरतयानपुष्पमाल्यस्य त्रपुष्पपदमिवोत्कृष्टपुष्पपरतयेतिबोध्यं॥
वादयोग्यतासूचनायपूनोरित्युक्तं अयंहीत्युदाहरणेऽभेदारोपहेतुभूतंपुरदाहकत्वरूपंसाधर्म्यमुपात्तंद्वहतुजगद्रक्षकत्वादिकंनतगम्यमानमितिभेदः

वेधादृति द्वेधा कांताधर्मिकत्वकनकधर्मिकत्वरूपद्विधाद्वयमुक्तं अत्रमंवलवदनिष्टाननुबंधिसुखसाधनत्वभ्रमं सर्वेषामपि अत्रमाणां वेधसानिर्माणेपि प्राधान्यविवक्षये
त्यमभिधानं अयमास्तदस्युदाहरणेषु अभुसादृश्यंगम्यमानमिहत्वनासक्तिरूपं तदुपात्तमितिभेदः त्वय्यागतइति राजानं प्रतिकवेरुक्तिः सेतुश्चमंथश्चेति द्वंद्वस्य
नं मंथः अमृतमथनद्वीपांतरेपोत्यपिनासुतरामेनतद्वीपेनासीतीतिसूच्यते अयघराजभावावस्थायां शंभुर्विश्वमित्यत्र विश्वसंरक्षकत्वंसादृश्यमुपात्तं इहतुनेति
भेदः किंपद्मस्येति दर्पितांप्रतिनायकोक्तिः तववक्त्ररूपेंदुकार्यकारिणिसति अयमपरः प्रसिद्धः शीतांशुश्चंद्रः यतउज्जृंभते उदितोभवति तस्मात्तववक्त्रेंदुः पद्म

वेधाद्वेधास्त्रमंचक्रे कांतासु कनकेषु च तासु तेष्वप्यनासक्तः साक्षाद्भर्गोनराकृतिः अत्र साक्षादिति विशेषणेन विरक्तस्य प्रसिद्धशिवतादात्म्य
मुपदिश्यनराकृतिरितिदिग्मूर्तिवैकल्यप्रतिपादनान्न्यूनाभेदरूपकं त्वय्यागते किमितिवेधतएषसिंधुस्त्वसेतुर्मंथकृद्दतः किमसौवि
भेति द्वीपांतरेपि नहि तेस्त्यवशाबदोपलोराजपुंगवनिषेवतएवलक्ष्मीः अत्र त्वं सेतुमंथकृदिति सेतोर्मंथनस्य च कर्त्रा उ पुरुषोत्तमेन सह व
र्णनीयस्य तादात्म्यमुक्त्वा तथापि त्वदागमनं सेतुबंधाय मंथनायवेति समुद्रेण न भेतव्यं द्वीपांतराणामपि त्वद्वशंवदत्वेन पूर्ववद्वीपांतरेजेत
व्याभावात्प्राप्तलक्ष्मीकत्वेन मंथनप्रसक्त्यभावाच्चेति पूर्वावस्थातउत्कर्षविभावनादधिकाभेदरूपकं किंपद्मस्यरुचिं न हंति नयनानंदं विध
तेनकिंवृद्धिंवाझषकेतनस्य कुरुते नालोकमात्रेण किं वक्त्रेंदौ तव सत्ययं यदपरः शीतांशुरुज्जृंभते दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव विंबा
धरे अत्रापरः शीतांशुरित्यनेन वक्त्रेंदोः प्रसिद्धचंद्राद्भेदमाविष्कृत्य तस्य च प्रसिद्धचंद्रकार्यकारित्वमात्रप्रतिपादनेनोत्कर्षापकर्षयोरप्रदर्शनाद

स्यरुचिं कांतिं किं न हंति प्रायोजनमनुद्दिश्य न मंदोपि प्रवर्त्ततइति न्यायात् प्रयोजनस्याप्यतः संभवेतदुज्जृंभणस्यासंगतेरिति किं न हंतीति काकाअपितु हंस्येवेतिप
र्यवसानेतदुज्जृंभणं वृथेतिप्रतीतिपर्यवसानं एवमग्रिमवाक्ययोरपि ज्ञेयो मकरः केतनेचिह्नमस्यतथाभूतस्यसमुद्रस्यकामस्यच आलोकनमालोकः प्रकाशश्च
तन्मात्रेण अमृतेनदर्पोभिमानः उज्जृंभणहेतुः स्याच्चेत् अयुक्तमेतत् यतः इहवक्त्रेंदौ विंबाधरेतदप्यस्त्येवेति समुचितपदाध्याहारेण योजनीयमच्छंदस्योत्तरवाक्य
गतेत्वेनतच्छब्दाक्षेपसमर्थत्वात्तदनुपादानेपिन्यूनपदत्वदोषः कार्यकारित्वमात्रेत्यनेनाभेदव्यावृत्तिः अस्यामस्वेंदुनेत्यत्र किमिदंनेति पुनरुपादानमात्रेभेदविवक्षातप

कु॰ टी॰ चं॰ १० अचतुर्वदनइति वादरायणोव्यासः भालनेत्र शंभुः(?) अपरेति अधरपाणिः अबाहुरित्येकगुणत्वाद्भुवीति ननु हरावपरद्युतिविशेषणात्तद्धीएवताद्रूप्यरूपकंस्यात् इति रोशेत्वभेदरूपकमेवेत्याशंक्याह अत्रेति त्रिष्वपीति एकत्रानेकारोपस्यपायोरूपकमालायामवैरूप्यपतात्पर्यग्राहकस्यैकत्रास्थितस्यापि साधारण्यमेवोचितमितिभावः अयमेव चसाध्वीत्यादिपूर्वोदाहरणाद्विशेषः न्यूनरूपस्यचमत्कारित्वंपूर्वमुक्तंदृढसंमत्यादृढयति इदमिति यदाहेत्यनंतरंसइतिशेषः एकगुणहानौत्रभिहितायामितिशेषः गुणसाम्यदार्ढ्ये शेषगुणसंयुक्तसाम्यायोगअवच्छेदः चतुर्वदनत्वाद्येकगुणातिरेकस्यप्रमाणांतरसिद्धस्यपुनर्वचनेशेषगुणाभावपरिसंख्यार्थपर्यवस्यतीतिभावः अत्रवरूपकप्रभेदत्वेनैवचमत्कारोपपत्तौनालंकारांतरत्वंन्यूनत्ववर्णनस्ययुक्तंसामग्रीकालीनकार्याभावस्यत्वलंकारांतरासंभिन्नस्यतद्रूपस्यमाणयुक्तमित्यस्वरसो मतमित्यनेनसूचितः किमसुभिरितिमूर्खंजलमयसाधारणंचंद्रसंबोधनंग्लपितैर्नष्टैरम्भिर्निमित्तभूतैर्भैमसुतायादमयंत्यामनःमयिनिमज्जतुनिलीयतामि
जडेति ६
अचतुर्वदनोब्रह्माद्विबाहुरपराहरिः अभाललोचनःशंभुर्भगवान्वादरायणः अत्रहरावपरइति विशेषणात्रिष्वपितादूप्यमात्रविवक्षाविभावि
ता चतुर्वदनत्वादिवैकल्यंचोक्तमितिन्यूनताद्रूप्यरूपकं इदंविशेषोक्त्युदाहरणमितिवामनमतं यदाह एकगुणहानौगुणसाम्यदार्ढ्यंविशेषो
क्तिरिति किमसुभिर्ग्लपितैर्जडमन्यसेमयिनिमज्जतुभीमसुतामनः ममकिलश्रुतिमाहतदर्थिकांनलमुखेदुपरांविबुधःस्मरःअत्रदमयंती
कृतचंद्रोपालंभेप्रसिद्धचंद्रोननिर्याणकालिकमनःप्रवेशश्रुतितात्पर्यविषयःकिंतुनलमुखचंद्रएवेतिततोस्याधिक्यप्रतिपादनादधिकताद्रूप्यरू
तिमन्यसेकिमितिसोपहासकाकुः तेनमैवंमंस्थाइत्यर्थः अत्रहेतुमाह किलनिश्चि
रूपकं रूपकस्यसावयवत्वनिरवयवत्वादिभेदप्रपंचनंतुचित्रमीमांसायांद्रष्ट
तंममविबुधःपंडितःस्मरःतदर्थिकांसःप्राणनिर्गमकालीनमनःप्रवेशःअर्थोयस्यास्तांश्रुतिंनलमुखेंदुपरांमनःप्रवेशाधिकरणत्वेननलमुखचंद्रतात्पर्यवतीमाहेति
अपंकलंकिनइत्युदाहरणेदोषशून्यत्वप्रयुक्तंशब्दमाधिक्यंइहतुगुणविशेषप्रयुक्तंगम्यमानंतदितिविशेषः सावयवत्वनिरवयवत्वादीति आदिनासमस्तवस्तुविषयत्वा
दिरूपैतत्प्रभेदानांपरंपरितत्वरूपभेदांतरस्यचपरिग्रहः तथाहिसावयवंनिरवयवं परंपरितंचेतित्रिविधंरूपकंप्रत्येकंक्रमेणद्विविधंसमस्तवस्तुविषयंएकदेशविवर्ति
वकेवलमालाचश्लिष्टवाचकं अश्लिष्टवाचकंचेति श्लिष्टाश्लिष्टभेदयोःकेवलमालारूपताभ्यामत्यंचतुर्विधमित्यष्टौभेदाः तत्रज्योत्स्नाभस्मछुरणधवलाबिभ्रतीतारका
स्थीन्यंतर्धानव्यसनरसिका

दो पातर्द्वीपेभ्रमतिदधतीचंद्रमुद्राकपाले न्यस्तं सिद्धांजनपरिमलं लांछनस्य छलेनेति पद्ये रात्रौ कापालिकीत्वारोपस्य प्रधानतयावयविनोऽवयवरूपाणि ज्यो-
त्स्नाभस्मेत्यादिरूपकाणीति सावयवत्वं समस्तस्य वस्तुन आरोप्यमाणस्य शब्दविषयत्वं च द्रष्टव्यं प्रौढमौक्तिकरुचः पयोमुचां विंदवः कुटजपुष्पवंधवः वियुतां न-
भसि नाट्यमंडले कुर्वते स्म कुसुमांजलिश्रियमित्यत्र प्रधानस्य नभसि नाट्यमंडलत्वारोपस्यावयवभूतं विद्युतां नर्तकीत्वरूपसामार्थ्येन शाब्दमित्येकदेशविशेषेण
शब्दतयावर्तनादेकदेशविवर्तित्वं कुरंगीवांगानि स्तिमितयति गीतध्वनिषु यत्सखीं कांतोदंतश्रुतमपि पुनः प्रश्नयति यत् अनिद्रं यच्चांतः स्वपिति तदहो वेद्म्यभि-
नवां प्रवृत्तोस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकामित्यत्र प्रेमलतिकामित्यमालारूपं निरवयवं सौंदर्यस्य तरंगिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कांतेः कार्मणकर्म नक-
रहस्यामुद्रासनावासभूः विद्यावक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रियावाणाः पंचशिलीमुखस्य ललना चूडामणिः सा प्रियेत्यत्र च मालारूपं निरवयवं बोध्यं एव

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा यत्रारोप्यमाणो विषयी किंचित्कार्योपयोगित्वेन विवक्ष्यमाणः स्वत-
स्तस्य तदुपयोगित्वासंभवात्प्रकृतात्मतापत्तिमपेक्षते तत्र परिणामालंकारः अत्रोदाहरणं प्रसन्नेनेति अत्र हि अब्जस्य वीक्षणोपयोगित्वं निब-
ध्यते न तु दृशः मयूरव्यंसकादिसमासेन उत्तरपदार्थप्राधान्यात् न वोपमितसमासाश्रयणेन दृगब्जमिवेति पूर्वपदप्राधान्यमस्तीति वाच्यं प्रस-
न्नेनेति सामान्यधर्मप्रयोगादुपमितं व्याघ्रादिभिः सामान्याप्रयोग इति तदप्रयोग एवोपमितसमासानुशासनात् अब्जस्य वीक्षणोपयोगित्वेन
स्वात्मनासंभवति अतस्तस्य प्रकृतदृगात्मतापरिणत्यपेक्षणात्परिणा-
मालंकारः

अलौकिकमहालोकप्रकाशितजगत्त्रयः स्तूयते देव सद्वंशमुक्तारत्न न कैर्भवानित्य-
त्र वेणुकुलयोः श्लिष्टेन वंशपदेन कुले वेणुत्वारोपपूर्वक एव राज्ञि मुक्तारत्नत्वारोप इति श्लिष्टवाचकं केवलं परंपरितरूपकं विद्वन्मानसेत्यादावेतदेव मालारूपं चतुर्द-
शलोकवल्लिकंद इत्यत्राश्लिष्टवाचककेवलपरंपरितं पर्यंको राज्यलक्ष्म्या इत्यादावालानं जयकुंजरस्येत्यादौ चाश्लिष्टवाचकं मालापरंपरितं च द्रष्टव्यं विस्तरभया-
न्नेह प्रपंच्यते इत्यलंकारचंद्रिकायां रूपकप्रकरणं परिणामं लक्षयति परिणाम इति विषयिनिष्ठया प्रकृतकार्योपयोगितायाश्चावच्छेदिका विषयात्मतापरिण-
तिः परिणामः सा च विषयतादात्म्यापन्नस्य विपर्ययता एवं च विषयाभेदस्यैव विषयिणि विवक्षणात् दृगभिन्नेनाब्जेनेति स्वारसिक एव बोधः न तु रूपक इव दृङ्निष्ठा-
भेदप्रतियोगिना वेतस्यनयो

गिलमुखद्रूतिरूपकाद्भेदेबोध्यः

कु॰ टी॰ चं॰ ११

अथमासेप्युदाहरति नीलेति मुरारिनाटकगतमेतत्पद्यं आत्मनातृतीयः सीतालक्ष्मणसहित इति यावत् असौप्रक्रान्तो रामः भूतेशस्य शंभोर्मौलिमाला रूपाममरत
टीगंगांतीर्णवान् तस्मैनाविकाय गुहसंज्ञायनिषादपतये सौमित्रेर्लक्ष्मणस्य मैत्रीरूपमातरं तरणमूल्यमुपकृतवान् उपकाररूपतयादत्तवान् अथोऽनन्तरं चित्र
कूटं प्रतिप्रतस्थे प्रस्थितवान् कीदृशः श्यामेन तिर्यक्प्रसारितभुजद्वयान्तरालेन याह्यौ तावत्परिणाहोस्तनौ यासांतथाभूताभिः शवराणां व्याधानां युवतिभिः
कौतुकेनोदंचति विकसंत्यक्षीणि यत्रक्रियायांतथाकृच्छ्रात्क्लेशादत एवक्षणमन्वीयमानोऽनुगम्यमान इत्यर्थः इतिपरिणामप्रकरणं अथोल्लेखालंकारंलक्षयति
बहुभिरिति एकस्यबहुधोल्लेखादित्यन्वयः उल्लेखनं विषयीकरणमुल्लेखः हेतौ पंचमी तथाचैवं विधोल्लेखाद्धेतोरुल्लेख इष्यते उल्लेख इति प्रवर्त्यत इत्यर्थः अ

यया वा नीलीभूते शंभोर्मौलिस्रजममरधुनीमात्मनासौ तृतीयस्तस्मै सौमित्रिमैत्रीमयमुपकृतवानात्तरं नाविकाय व्यामग्राह्यस्तनीभिः शवरयु
वतिभिः कौतुकोदंचदक्षं कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे अत्रारोप्यमाणभ्रातरः सौमित्रिमैत्रीरूपतापत्या गुहोपकारलक्षण
कार्योपयोगीन स्वात्मना गुहस्य रघुनाथप्रसादैकार्थित्वेन वेतनार्थित्वाभावादिति परिणामालंकारः बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते
स्त्रीभिः कामोर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः यत्रनानाविधधर्मयोग्येकं वस्तु तत्तद्धर्मयोगरूपनिमित्तभेदेन अनेकेनग्रहीत्रा अनेकधोल्लि
ख्यते तत्रोल्लेखः अनेकधोल्लेखने रुच्यर्थित्वभयादिकं यथार्हं प्रयोजकं रुचिरभिरतिः अर्थित्वं लिप्सा स्त्रीभिरित्याद्युदाहरणं अत्रैक एव राजा
सौंदर्यवितरणपराक्रमशालीति कृत्वा स्त्रीभिरर्थिभिः प्रत्यर्थिभिश्च रुच्यर्थित्वभयैः कामकल्पतरुकालरूपो दृष्टः ॥१॥ वहारंप्रतिलक्षणस्यप्रयोजक

त्वात् स्त्रीभिरिति स्वर्द्रुः स्वर्गसंबंधी द्रुमः कल्पतरुः कालो यमः सप्रकृतो राजा श्लोकंव्याचष्टे यत्रेति नानाविधेति सौंदर्यदातृत्वशूरत्वादिरूपेत्यर्थः तत्तद्धर्मेति रुच्यर्थित्व
भयादिरूपेत्यर्थः एतच्च स्वरूपकथनं न तु लक्षणांतर्गतम् अनुद्धाभ्यां ग्रहीतृभ्यां निमित्तद्वयवशात्प्रकारद्वयेनोल्लेखेऽव्याप्तिरत आह अनेकेनेत्यादि तथा च लक्षणेब
हुपदमनेकपरमितिभावः एवं च ग्रहीतृविषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानानेकप्रकारत्वमुल्लेख इति लक्षणं बोध्यं सौंदर्यस्य तरंगिणीत्यादि माला
रूपकवारणायाद्यं विशेषणं तत्र ग्रहीतृभेदप्रयुक्तनानेकप्रकारत्वमिति नातिव्याप्तिः वक्ष्यमाणोल्लेखप्रभेदसाधारण्याय अन्यतमत्वप्रवेशः तद्विवेचनेन तद्व्याख्याना

विप्रा विक्रमसौंदर्यतपसां निधिमागतं पश्यंति विबुधाः भूयः स्त्रियो वृद्धाश्च कौतुकादित्यत्रानिश्चाप्तिरतो ऽनेकप्रकारत्वमित्युक्तं न चोल्लिख्यमानप्रकारत्वमित्येवास्तु
उक्तोदाहरणे प्रकारस्य कस्याप्यनुल्लेखादेवानतिप्रसंगादिति वाच्यं एवमपि नृत्यत्वद्वाजिराजिप्रखरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमनुलनि
रालोकभावं प्रयाते विश्रांतिं कामयंते रजनिरिति धिया भूतले सर्वलोकाः कोकाः क्रंदंति शोकानलविकलतया किंच नंदत्युलूकाद्दत्यत्र धूलिजालरूपस्यैकस्य
वस्तुनो नैकैर्लोककोकोलूकैर्ग्रहीतृभिरेकेनैव रजनीत्वेन प्रकारेणोल्लेखनादतिव्याप्तेर्वारणाय प्रकारेऽनेकत्वोपादानस्यावश्यकत्वात् सिंजानैर्मंजरीतिस्तनकलश
युगं चुंबितं च वरीकैस्तन्मासोल्लासलीलाः किसलयमनसापाणयः कीरदष्टाः तल्लोपायालयंत्यः पिकनिनदपि यातांडिताः काकलोकैरित्थं चोलेंद्रसिंहत्वदरि

यथा वा गजत्रातेति वृद्धाभिः श्रीकांत इति योवतैः यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकं अत्र यस्तथाभीतं भक्तंगजं त्वरया त्रायते
स्मसोयमादि पुरुषोत्तम इति वृद्धाभिः संसारभीत्या तदभयार्थिनीभिः कृष्णोऽयं मथुरापुरं प्रविशन् दृष्टः यस्तथा च बलत्वेन प्रसिद्धायाः
श्रियोऽपि कामोपचारवैदग्ध्येन नित्यं वल्लभः सोयं दिव्ययुवेति युवतिसमूहैः सोत्कंठं दृष्टः बालाभिस्तदा स्वागतरूपवेषालंकारदर्शनमा
त्रलालसाभिर्यथास्थितवेषादियुक्तो दृष्ट इति बहुधोल्लेखः पूर्वः कामत्वाद्यारोपरूपकसंकीर्णः अयं तु शुद्ध इति भेदः एकेन बहुधोल्लेखे
प्यसौ विषयभेदतः गुरुर्वचस्यर्जुनोयं कीर्तौ भीष्मः शरासने ॥

मृगदृशां नाप्यरण्यं शरण्यमित्यनेकगतभ्रांतिपरं परायामतिप्रसंगवारणार्थमेकस्ये
त्युक्तमिति संक्षेपः यथार्हमिति स्त्रीभिः कामलोल्लेखे तासां रुचिरनुरागः प्रयोजकः अर्थिभिः कल्पतरुत्वोल्लेखे तेषां लिप्सा प्रयोजिका शत्रुभिर्यमत्वोल्लेखे तेषां
भयं प्रयोजकमित्येवं यथायोग्यमित्यर्थः उदाहरणांतरमाह यथावेति श्रीकृष्णस्य मथुराप्रवेशवर्णने शौरिः श्रीकृष्णः वृद्धाभिर्जगन्नाते ति दृष्ट इत्यास्यन्व
यः सकौतुकं सोत्कंठमिति दर्शनक्रियाविशेषणं सर्वत्र संबध्यते श्लोकं व्याचष्टे प इति तथा महाग्रहग्रह णेन युवतिसमूहैः तरुणीसमूहैः पूर्वमिति उदाहृत इति शे
षः उल्लेख इत्यनुषज्यते आरोपरूपकसंकीर्ण इति पाठे आरोपस्वरूपं यद्रूपकं तत्संकीर्ण इत्यर्थः आरोपरूपरूपके तिपाठस्तु स्पष्टार्थ एव उल्लेखप्रभेदांतरमाह एके

ग्रहो चेति विषयभेदादित्यनेनोत्तरमेकस्येति शेषः विषयपदमाश्रयसंबंधिनो रूपलक्षणं अत एवलक्षणे ग्रहोत्र विषयादोत्यादिपदेन तत्त्वग्रहः कृतः तत्र विषयस्त
ममोनिर्दिष्टो विषयस्तु सप्तम्यंते अधिकरणमप्तमी निर्दिष्टस्ताश्रयः षष्ठ्यादिनिर्दिष्टः संबंधीति विवेकः गुरुरित्यस्यार्थकथनेन महानिति गुरुर्महति वा अवदिति विश्व
कोशात् पट्टरिति तु तत्पर्यवसितार्थकथनं पटुः स्फुटइत्यादौ तादिनाकोर्तिविषये ऽर्जुनो धवलइतिवसार्थरस्पर्योत्तरस्य धनुर्विषये भीष्मो भीषणइतिवत् गांगेय
इत्यर्थांतरस्य च संग्रहः भीष्मस्तु भीषणे रुद्रे गांगेये च निशाचरइति विश्वः कोडीकरणात् एकवृंतगतफलद्वयन्यायेन संग्रहात् अकृशमिति कपालिनो हरस्य भ
गधेयभाग्यतत्वेनाध्यवसितं पार्वतीस्वरूपं चित्ते आविरस्तु प्रकटीभवत्विति संबंधः किंभूतं कुचयोः वृत्तविषये अकृशं स्थूलं एवमग्रेपि विलग्नामध्यः विल

ग्रहीतृभेदाभावेपि विषयभेदाद्बहुधोल्लेखनादसावुल्लेखः उदाहरणं श्लेषसंकीर्णं क्वचो विषयेमहान्पदुरित्यादिवत् बृहस्पति
रित्याद्यर्थांतरस्यापि कोडीकरणात् मुद्राययाअकृशं कुचयोः कृशं विलग्ने विपुलं चक्षुषि विस्तृतं नितंबे अधरेरुणमाविरस्तु चित्ते
करुणाशालिकपालिभागधेयं स्यात्स्मृतिभ्रांतिसंदेहैस्तदंकालंकृतित्रयं पंकजं पश्यतः कांतामुखं मे गाहते मनः अयं प्रमत्तमधु
पस्त्वन्मुखं वेत्ति पंकजं पंकजं वा सुधांशुर्वेत्यस्माकं नु न निर्णयः

ग्रोमध्यलग्नयोरिति विश्वः विपुलं आयतं अधरे अधरोष्ठे अरुणमारक्तं अरुणाधरमिति पाठस्तु प्रक्रमभंगाद युक्तः चित्तेइति करुणाशालीत्यत्रापि मध्यम
णिन्यायेन संबध्यते एवं तु षारस्तापमवाते ताम्रसेषु चतापिनः दृगंतास्ताडकाशत्रोर्भूयासुर्मे मभूतयइत्यादावधिकरणानेकत्वप्रयुक्तः यमः प्रतिमहीभृतां
हुतवहो सितनीवृतां मतोरवलु युधिष्ठिरो धनपतिर्धनाकांक्षिणां गृहं शरण्यमिच्छतां कुलिशकोटिभिर्निर्मितं लमेकइहभूतलेवड्विपो विधात्राकृतइत्यादौ सं
बंधिभेदप्रयुक्तश्चोल्लेखोद्रष्टव्यइति दिक् इत्यलंकारचंद्रिकायामुल्लेखप्रकरणं अयज्ञानप्राधान्यसाम्यात्स्मृत्यादीनलंकारानलक्षयति स्यादिति स्मृतिभ्रांति
संदेहैर्व्यवहर्तव्यतयाहेतुभूतैस्तदंकं तेषामंकस्तदंकः तदंको विद्यते अस्मिन् तथाभूतं मत्वर्थीयाच प्रत्ययात् अकश्चिह्नं संज्ञेतियावत् तेन तत्संज्ञासंज्ञित
मित्यर्थः अलंकृतित्रयं व्यवहारविषयः स्यादिति योजना ॥ ॥ ॥ ७ ॥

एवं च स्मृतित्वभ्रांतित्वसंदेहत्वानि त्रीणि लक्षणानि तत्र स्मृतित्वं तावत्स्मरामीत्यनुभवसाक्षिको जातिविशेषः भ्रांतित्वं विशेष्यावृत्तिप्रकारकज्ञानत्वं संदेहत्वं तु निश्चयभिन्नत्वे सति संभावनाभिन्नज्ञानत्वं पारिभाषिकं स्मृतिभ्रांत्यादिवारणाय सत्यंत उत्प्रेक्षावारणाय संभावनाभिन्नेति चमत्कारित्वं पुनरखिलालंकारसाधारणं लक्षणावयपि निवेशनीयं तेन संघट इति स्मृताविदं रजतमिति भ्रांतावयं स्थाणुः पुरुषो वेति संशये नातिप्रसंग इति ध्येयं गाहते आकलयति स्मरतीति यावत् सादृश्यान्निबध्यमानैरिति चमत्कारित्वोपलक्षकं न त्वेतस्यापि स्वातंत्र्येण लक्षणे प्रवेशः सादृश्यामूलकानामपि स्मृत्यादीनां चमत्कारित्वेऽलंकारतायाः अनिवार्यत्वात् चमत्कारित्वेकजीवातुत्वात्तस्याः अचमत्कारित्वे तु तेनैव वारणमिति व्यर्थं सादृश्यहेतुकत्व. विशेषणं न चैतत्तदेवोपादीयतां न तु चमत्कारित्वविशेषणमिति वाच्यं उदाहृतेषु सा

स्मृतिभ्रांतिसंदेहैः सादृश्यान्निबध्यमानैः स्मृतिमान्भ्रांतिमान्ससंदेह इति स्मृत्यादिपदांकितमलंकारत्रयं भवति तत्र क्रमेणोदाहृतं यथा वा दिव्यानामपि कृतविस्मयां पुरस्तादंभस्तः स्फुरदरविंदचारुहस्तां उद्वीक्ष्य श्रियमिव कांचिदुत्तरंतीमस्मार्षीज्जलनिधिमंथनस्य शौरिः पूर्वत्र स्मृतिमदुदाहरणे सदृशस्यैव स्मृतिरत्र सदृशलक्ष्मीस्मृतिपूर्वकं तत्संबंधिनो जलनिधिमंथनस्यापि स्मृतिरिति भेदः पलाशमुकुलभ्रांत्या शुकतुंडे पतत्यलिः सोऽपि जंबूफलभ्रांत्या तमलिं धर्तुमिच्छति अत्रान्योन्यविषयभ्रांतिनिबंधनः पूर्वोदाहरणाद्विशेषः जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः किं कनिष्ठाः किमु ज्येष्ठा घटीयंत्रस्य दुर्जनाः पूर्वोदाहृतसंदेहः प्रसिद्धकोटिकः अयं तु कल्पितकोटिक इ

सादृश्यमूलकस्मृत्यादिष्वतिप्रसंगवारणार्थं तस्यावश्यकत्वादिति संक्षेपः दिव्यानामिति माघे जलक्रीडावर्णनप्रस्तावे पद्यमिदं शौरिः श्रीकृष्णः अंभस्तः जलात् उत्तरंतीं निर्गच्छंतीं श्रियमिव श्रीसदृशीं कांचित्पुरस्तादग्रे उद्वीक्ष्य जलनिधिमंथनस्य अस्मार्षीत्स्मृतवान् अधीगर्थेति कर्मणि षष्ठी किंभूतां दिवि भवा दिव्यास्तेषां देवानामपि सौंदर्यातिशयेन कृताश्चर्यां तथा स्फुरता अरविंदेन कमलेन चारुः रमणीयः हस्तो यस्यास्तथाभूतां तथा चैवंविधनायिकासदृशलक्ष्मीस्मरणात्तत्संबंधिजलनिधिमंथनस्मरणमिति भावः अत्र श्रियमिवेत्युपमायाः स्मृत्यंगत्वात्तयोरंगांगित्वलक्षणः संकरः पलाशेति वक्रिमलौहित्यरूपसादृश्यात् भ्रांतिः अलिः भ्रमरः सोऽपि शुकोऽपि भ्रांतिनिबंधन इति भ्रांतिप्रयुक्त इत्यर्थः जीवनेति जीवनं जलं प्राणसंयोगश्च अथवा जीवंते तेनेति जीवनं धनं नम्राः अधोमुखाः विनीताश्च उन्नताः

कु॰ टी॰
च॰
९३

अप्रसिद्धेतिपटीयंत्रसंबंधिनोऽर्जेयष्टकनिष्ठयोः कोटयोरप्रसिद्धेरितिभावः इत्यलंकारचंद्रिकायांस्मृतिभ्रांतिसंदेहप्रकरणं अथापह्नुतिः तत्रतावदभेदप्रतिपत्तिनिरूपित
गांगित्वान्यतरवान्निषेधोपह्नुतिरित्यपह्नुतिसामान्यलक्षणं निषेधश्चनञादिसत्वेवाच्यः क्वचित्तुतदभावात्कैतवादिपदैः परमतत्वोपन्यासादिभिश्चव्यंग्यः तथाक्वचि
दभेदप्रतिपत्तिसमानाधिकरणः क्वचित्तुतद्व्यधिकरणइतिविवेकः एवमभेदः क्वचिदारोप्यमाणः क्वचित्तुस्वाभाविकः एवंतत्प्रतिपत्तिरपिक्वचित्व्यंजनया प्रायश
स्तुवाच्यवृत्त्येतिबोध्यं निषेधोऽपह्नुतिरित्येतावदुक्तौनद्यूतमेतत्किंतवक्रीडनंनिशितैः शरैरितिप्रसिद्धनिषेधानुवादरूपोप्रतिषेधालंकारेतिव्याप्तिरतोऽभेदप्र
तिपत्तिनिरूपितेत्यादिविशेषणमुपात्तं तत्रहियुद्धप्रवृत्तंकितवंप्रतियुद्धेद्यूतत्वाभावोभिज्ञातोपिकौरवसमानोयतएवतवप्रागल्भ्यंनतुयुद्धइत्युपहासार्थोनतुयु
द्धाभेदप्रतिपत्त्यंगं तस्यास्तदुपन्यासंविनापिसिद्धत्वात् नाप्यंगिभूतः निर्ज्ञाततत्वेनतदुपायानपेक्षणादितितद्वारणं अभेदप्रतिपत्तिनिरूपितांगित्वमात्रोक्तौशुद्धा
पह्नुतिहेत्वपह्नुतिपर्यस्तापह्नुतिकैतवापह्नुतिष्वव्याप्तिः तत्रसर्वत्रनायंसुधांशुरित्यादेर्निषेधस्यव्योमगंगासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेनतदंगतयांगित्वाभावा

शुद्धापह्नुतिरन्यस्यारोपार्थोधर्मनिह्नवः नायंसुधांशुःकिंतर्हिव्योमगंगासरोरुहं वर्णनीयेवस्तुनितत्सदृशधर्मारोपफलकस्तदीयधर्मस्यापह्नवः
निह्नवः कविमतिविकासोत्प्रेक्षितधर्मांतरस्यापिनिह्नवः शुद्धापह्नुतिः यथाचंद्रे वियन्नदीपुंडरीकत्वारोपफलकस्तदीयधर्मस्यचंद्रत्व

त् अभेदप्रतिपत्तिनिरूपितांगत्वमात्रोक्तौच भ्रांतापह्नुतिछेकापह्नुत्योरव्याप्तिः तयोर्भ्रांतिशंकानिवारणरूपनिषेधस्यप्राधान्येनाभेदप्रतिपत्त्यंगत्वाभावादतस्तदन्यतरत्व
त्वनिवेशः तदाहुः साम्यायापह्नवोयत्रसाविज्ञेयात्वपह्नुतिः अपह्नवायसादृश्यंयस्मिन्नेषाप्यपह्नुतिरिति सर्वंचैतत्तदुदाहरणव्याख्यानावसरेव्यक्तीभविष्यती
त्यत्रप्रपंचितं एवंसामान्यलक्षणंमनसिनिधायशुद्धापह्नुत्यादींस्तद्भेदान्वक्तुमुपक्रमतेशुद्धापह्नुतिरिति लक्षणमाचष्टे वर्णनीयइतिकविमतेर्विकासः स्फूर्तिस्तया
ल्पितातथाचोपमेयेउपमानारोपफलकउपमेयधर्मत्वाभिमतनिषेधः शुद्धापह्नुतिरितिलक्षणमितिभावः अत्रचानुक्तनिमित्तत्वेकैतवादिपदाप्रयोगत्वंचनिषेधवि
शेषणंबोध्यं तेनहेत्वपह्नुतौकैतवापह्नुतौचनातिप्रसंगः कांतः किंनहिनूपुरइतिछेकापह्नुतौउपमेयधर्मस्यकांतत्वस्यनिषेधसत्वादितिप्रसंगवारणायायांविशेष
णं तत्रहिनकांतत्वनिषेधोनूपुरारोपार्थोऽपितुनूपुरारोपएवंशंकितकांतत्वनिषेधार्थइतितद्व्यावृत्तिः पर्यस्तापह्नुतिवारणायोपमेयधर्मेत्युक्तं तत्रोपमानधर्मस्यैवव्य

शत्वादेर्निषेधइतिनातिव्याप्तिरितिसर्वंसुस्थं पुंडरीकेति ९३
रीकं सितांभोजमित्यमरः

एवं च सरोरुहपदं विशेषपरमिति भावः अंकमिति इंदौ दृश्यमानस्य स्फुरितस्य इंद्रनीलमणेः शकलवत् खंडवत् श्यामं यद्रूपं दृश्यते तत्केचित्कवयः अंकं कलंकं शशं किरणं शंकितवंतः परे ऽन्ये जलनिधेः पंकमेनिरे कतिचित्तु नः सारंगं जगदिरे अब्रुवन् परे इतरे भुवः भूमेश्छायाभूछायं ऐछन् विभाषासेनासुराछाये त्यादिना क्लीबत्वं वयं तु सांद्रघनेन निशाध्वांतेनापीतं अत एव कुक्षिस्थं मंथतमसं गाढध्वांतं आचक्ष्महे ब्रूमहे इत्यन्वयः अत्रोत्प्रेक्षिकाः उत्प्रेक्षामात्रविषयाः कलंकादयः अपि नास्वाभाविकस्य भूछायत्व स्य समुच्चयः अर्थसिद्ध इति नायं सुधांशुरित्यत्र नेति शब्दाश्रयाः तत्रान्त्याः शंकाः इह तु परमतत्वोत्कीर्तनेन स्वानभिमतत्वसूचनादर्थगम्य इत्यर्थः एकत्रानेकापह्नवरूपत्वात्प्य त्रैविचित्र्यं बोध्यं    हेत्वपह्नुतिमाह स एवेति शुद्धापह्नव एवेत्यर्थः युक्तिपूर्वक इति योज्यते साध्यमनेनेति युक्तिर्हेतुः तत्पूर्वस्तत्सहित इत्यर्थः तथा च शुद्धापह्नवलक्षण

यथा वा अंकं केपि शशांकिरे जलनिधेः पंकं परे मेनिरे सारंगं कतिचिच्च संजगदिरे भूछायमैछन्परे इंदौ यद्दलितेंद्रनीलशकलश्यामं दरीदृश्यते तत्सांद्रं निशि पीतमंधतमसं कुक्षिस्थमाचक्ष्महे अत्रोत्प्रेक्षिकधर्माणामप्यपह्नवः परपक्षत्वोपन्यासादर्थसिद्धः स एव युक्तिपूर्वश्चेद्धेत्वपह्नुतिः नेंदुस्तीव्रो न निशर्कः सिंधोरौर्वोयमुत्थितः अत्र चंद्र एव तीव्रत्वनैशत्वयुक्तिभ्यां चंद्रत्वसूर्यत्वापह्नवा वडवानलत्वारोपार्थः यथा वा मंथानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणः स्फुरतींदुमध्ये छायामृगः शशक इत्यतिपामरोक्तिस्तेषां कथंचिदपि तत्र हि न प्रसक्तिः अत्र चंद्रमध्ये मंथनकालिकमंदरशिलासंघट्टनव्रणकिणस्यैव छायादीनां संभवो नास्तीति छायात्वाद्यपह्नवः पामरवचनत्वोपन्यासेनाविष्कृतः अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः नायं सुधांशुः किं तर्हि

एवानुक्तनिमित्त इत्यस्य स्थाने उक्तनिमित्त इत्युक्ते हेत्वपह्नुतिलक्षणं संपद्यत इति भावः नेंदुरित्यादि विरहाकुलोक्तिः तीव्रोदारुणोपतापः अतो नेंदुः निशि रात्रौ सत्वान्नार्कः और्वस्तु वडवानल इत्यमरः नैशत्वेति निशिभवो नैशस्तत्त्वमित्यर्थः अत्रा पिचंद्रत्वं स्वाभाविको धर्मः सूर्यत्वं तौत्प्रेक्षिकमिति बोध्यं मंथानेति मंथानो मंथनदंडः स चासौ भूमिधरः पर्वतो मंदरस्तस्य मूलभारोपत शिलासहस्रं तेन संघट्टनात् योव्रणस्तस्य किणश्चिह्नमिंदुमध्ये स्फुरति प्रकाशते छायाभूमेः मृगो हरिणः शशकः शश इत्येषा अतिपामराणामुक्तममानामुक्तिः हि यस्मात्तेषां छायादीनां त त्रइंदुमध्यभागे कथंचित् किंचिदपि केनापि प्रकारेण प्रसक्तिर्नास्तीत्यन्वयः वैशाखमंथमंथानमंथनो मंथदंडके इत्यमरः नास्तीतीति इति हेतोरित्यर्थः ॥

कु॰ टी॰ पर्यस्तापह्नुतिमाह अन्यत्रेति मः अपह्नवः तथाचतदारोपार्थस्तस्यापह्नवइतिलक्षणं निषेधस्य चनस्वाधिकरणेप्रतियोग्यारोपार्थत्वसंभवोनवास्वाधिकरणेस्वा
वं॰ रोपइत्यर्थः सिद्धमेवारोपस्यान्याधिकरणत्वमन्यत्रेत्यनेनोक्तं अतएवपर्यस्तापह्नुतिरित्युच्यते पर्यस्ताआरोपविपरीताआरोपमधिकरणेतितदर्थात नच
१७ चंद्रेचंद्रत्वनिषेधस्यकथंमुखेतदारोपार्थत्वमितिवाच्यं आरोपदार्ढ्यसंपादकत्वेननिषेधस्यतदर्थतायाअनुभवसिद्धत्वात् अतएवदृढारोपरूपकमेवे
दंनापह्नुतिरितिप्राचांसिद्धांतस्तदनुसारेणेवचचित्रमीमांसायांप्रकृतस्यनिषेधेनयदन्यत्वप्रकल्पनमित्यपह्नुतिलक्षणमुक्तं इहत्वलंकाररत्नाकराद्यनुसा
रेणायंप्रभेदउपदर्शितसामान्यलक्षणाभिप्रायेणापह्नुतित्वेनोक्तइतिनिरवद्यं हालाहलइति हालाहलोविषंनैवभवतिकिंतुरमालक्ष्मीर्विषंजनाःपरंकेव

अन्यत्रवर्णनीयेवस्तुनितस्यधर्मस्यारोपार्थः पर्यस्तापह्नुतिः यथाचंद्रेचंद्रत्वनिह्नवोवर्णनीयेमुखेतदारोपार्थः यथावा हालाहलोनै
वविषंविषंरमाजनाःपरंव्यस्तयमत्रमन्वते निपीयजागर्तिसुखेनतंशिवःस्पृशन्निमांमुह्यतिनिद्रयाहरिः पूर्वोदाहरणेहेतूक्तिर्नो
स्तिअत्रतुसास्तीतिविशेषः ततश्चपूर्वापह्नुतिवदत्रापिद्वैविध्यमपिद्रष्टव्यं भ्रांतापह्नुतिरन्यस्यशंकायांभ्रांतिवारणे तापंकरोतिसोत्कं
पंज्वरःकिंनसखिस्मरः अत्रतापंकरोतीतिस्मरवृत्तांतेकथितेतस्यज्वरसाधारण्यादृजुबुद्ध्यासख्याज्वरः किमितिपृष्टेनसखिस्मरइ

लमत्रास्मिन्विषयेव्यत्ययंवैपरीत्यंमन्वतेअभ्युपगच्छंति कुतस्तत्राह यस्मात्शिवस्तंहालंनिपीयसुखेनजाग तिनत्वोक्त्याभ्रांतिवारणंकृतं ॥
र्तिहरिस्तुइमांरमांस्पृशन्सन्निद्रयामुह्यति स्मरन्निति पाठेस्मरन्नपिमुह्यतिकिमुस्पृशन्नित्यर्थः तथाचरमायाविषरूपत्वेमोहजनकत्वंहेतुःहालाहलस्यत
त्वापह्नवेचजागरसुखप्रयोजकत्वमितिवोध्यं हालाहलंविषइतिविश्वः अत्रस्पृशन्मुह्यतीतिकार्यकारणयोःपौर्वापर्यविपर्ययरूपातिशयोक्तिरलंकारःसाहेतूक्तिः
ततश्चेति हेतूक्तितदनुक्तिरूपभेदादित्यर्थः पूर्वापह्नुतिवत् शुद्धापह्नुतिवत् द्वैविध्यं शुद्धपर्यस्तापह्नुतिःहेतुपर्यस्तापह्नुतिरित्येवंद्विप्रकारत्वंभ्रांतापह्नुतिरितिभ्रा
अन्यस्यप्रकृतस्यभ्रांतिवारणेवार्यतेऽनेनेतिवारणं तथाचभ्रांतिवारकेतत्त्वाख्यानेसतीत्यर्थः भ्रांतंभ्रमःभावेक्तःभ्रांत्यपह्नुतिरित्यर्थः एवंचतत्त्वकथनहेतुक
भ्रांतिविषयनिषेधोभ्रांतापह्नुतिरितिलक्षणंवोध्यं तस्यतापकारित्वरूपस्मरवृत्तांतस्य ॥ ॥ ॥

नागरिकेति नगरेभवोनागरिकस्तेप्रतिग्रामीणस्यपश्वः समधिकापश्वंतरेभ्यःउन्नतिरुच्चतायस्यैवंभूतउभयतःमुखपृष्ठभागयोःपुच्छंयस्यैवंभूतश्वकोपंमहि षइतिनहिनहीत्युत्तरंमहिषइत्यनुषज्यते अयंकरिकलभःकरिशावकःकलभःकरिशावकइतिकोशात्कलभइत्येतावतैवसिद्धेकरिपदमुत्कृष्टकरिवा धार्थं अयमसमुंडादंडोनतुपुच्छमिति पुच्छइतिपाठोप्यदुष्टंचोदित्वात्साधुरेव अप्रयुक्तत्वंतुतत्रपरंविचार्यमिति पूर्वोदाहरणेतदेहरूपभ्रांतिविषयज्वर तापक्लवःज्वरःकिमितिप्रश्नेनतद्विषयसंदेहावगमात् इहतुमहिषत्वनिश्चयरूपभ्रांतिविषयस्यमहिषत्वस्येतितताभेदःजटेति विरहिण्याइयमुक्तिःहे कुसुमशरपुरारातेर्हरस्यभ्रांत्यामांकिंकुतःप्रहरसिपीडयसि यतोनेयंजटा किंतुवेणीकृतःस्ववेणीवेणीसंपद्यतेतथाकृतःकचानांकलापःतथागलेगर

यथावा नागरिकसमधिकोन्नतिरिहमहिषःकोयमुभयतःपुच्छः नहिनहिकरिकलभोयंशुंडादंडोयमस्यनतुपुच्छंइदंसंभवइभ्रां
तिपूर्विकायांभ्रांतापह्नुतावुदाहरणं कल्पितभ्रांतिपूर्वायथा जटानेयंवेणीकृतकचकलापोनगरलंगलेकस्तूरीयंशिरसिशशि
लेखानकुसुमंइयंभूतिर्नोगेप्रियविरहजन्माधवलिमापुराराति भ्रांत्याकुसुमशरकिंमांप्रहरसि अत्रकल्पितभ्रांतिर्जटानेयमि
त्यादिनिषेधमात्रोन्नेयापूर्ववत्प्रश्नाभावात् दंडीत्वत्रतत्वाख्यानोपमेत्युपमाभेदंमेने यदाहनपद्मंमुखमेवेदंनभृंगौचक्षुषीइ
मे इतिविस्पष्टसादृश्यात्तत्वाख्यानोपमामतेति ॥

लंनेतदपितुइयंकस्तूरी एवंशिरसिनैषाशशिलेखाकिंतुकुसुमं तथाइयमंगेभूतिर्भस्मनभवतिपरंतुप्रियविरहाज्जन्मयस्यैवंभूतोधवलिमापांडिमेति अवर्ज्योवहुव्रीहिर्व्यधिकरणोजन्माद्युत्तरपदइतिवामनसूत्राद्यधिकरणोपिवहुव्रीहिर्नदुष्टःकल्पितेति कुसुमशरेउत्प्रेक्षितेत्यर्थः निषेधमात्रोन्ने येति निषेधस्यप्रसक्तिपूर्वकत्वादितिभावःमेनइत्यस्वरसोद्भावनं तद्वीजंतूपमाबोधकस्येवादेरसत्वेपितदुपगमरूपकस्याप्युपमात्वस्यादितिस्पष्टमेव छेकापह्नुतिरिति छेकोविदग्धस्तत्कृताअपह्नुतिः छेकापह्नुतिरितिलक्ष्यनिर्देशःवाक्यान्यथायोजनहेतुकःशंकिततात्विकवस्तुनिषेधइतिलक्षणं अन्य स्यशंकायाःइत्यन्यशंकायानिवर्तनीयत्वेनहेतुतयाव्यपदेशःसंतापात्त्रातीतिवत् अत्रचमुद्रापह्नुतिवारणायार्थविशेषणंममकिलश्रुतिमाहतदर्थिका ॥

मित्वाधिकताद्रूप्यरूपकवारणायशंकितेति

नवाने नैव मुग्धापह्नुतिवारणाद्धा केत्यादिस्य र्थमितिवाच्यं कस्यचान्यवेद्रोवः मिदाय मद्वर्णधरे सभृंगं पद्मनाभासीं वारितापिनयाधुनातव्याजोक्ताव
तिप्रसंगवारकत्वं नत्तत्स्वार्थकयात् यद्दक्ष्यति छेकापह्नुतेरस्याश्चायं विशेषो यत्तस्यां वचनस्यान्यथानयनेनापह्नवः अत्र सामाकारस्य हेत्वंतरवर्णनेन गोपन
मिति तथ्यनिह्नवइति तात्विकनिषेधइत्यर्थः नूपुरो मंजीरः मंजीरो नूपुरोऽस्त्रियामित्यमरः नर्मसखी क्रीडासखी अत्र कांतयशायाः प्रजल्पन्मत्पदे लग्न
इत्युक्ते नूपुरतात्पर्यकत्ववर्णनेन कांतत्वापह्नवो मुग्धः नूपुराभेदप्रतिपत्तिस्तु तदंगमितिबोध्यं सीत्कारमिति सीत्कारं तदनुकारिमुखध्वनिं शिक्षयति
अधरं अधरोष्ठं व्रणयति व्रणोऽस्यास्तीति व्रणी व्रणिनं करोतीत्यर्थे तत्करोतीति णिच् तथा रोमांचं तनोति विस्तारयतीति वाक्यत्रयं नागरिकाभिप्रायेण प्रियस्य

छेकापह्नुतिरन्यस्य शंकातस्तथ्यनिह्नवे प्रजल्पन्मत्पदे लग्नः कांतः किं नहि नूपुरः कस्यचित्तर्कं विस्मितिरहस्योक्तावन्येन श्रुतायामुक्ते
स्तासंर्यांतरवर्णनेन तथ्यनिह्नवे छेकापह्नुतिः यथा नापि कयाचन नर्मसखी भणिति प्रजल्पन्मत्पदे लग्न इति स्वनायकवृत्तांते निगद्यमाने तदा
कर्ण्य कांतः किमिति शंकितवतीं अन्यां प्रति नूपुर इति निह्नवः सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमांचं नागरिकः किं मिलितो
नहि नहि सखि हैमनः पवनः इदमर्थयोजनया तथ्यनिह्नवे उदाहरणं शब्दयोजनया यथा पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुं
तले नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तन्नपादे

छेकापह्नुतिः

खीं प्रति कयाप्युक्तं तदाकर्ण्य नागरिकः किमु मिलित इति शंकितवतीमन्यां प्रति न च्छेका निरुक्तये नहीत्यादिना हैमं तिकपवनपरत्ववर्णनेन तात्विकस्य ना
गरिकस्यापह्नवः सीत्कारशिक्षादिकर्तृत्वस्य नागरिक इव पवनेऽपि सत्वात् तदाह अर्थयोजनयेति विवक्षिताविवक्षितसाधारणस्यार्थस्याविवक्षितार्थसं
बंधित्ववर्णनयेत्यर्थः इदमित्युदाहरणमिति च जात्यभिप्रायेणैकवचनं हैमंत शब्दात्तत्रभव इत्यर्थे सर्वत्राण्वतल्लोपश्चेत्यणि तल्लोपे च हैमन इति रूप
सि प्रजल्पन्नित्युदाहरणे एकस्य वाक्यस्यान्यथायोजनमिह त्वनेकेषामिति भेदः शब्दयोजनयेति अर्थभेदेऽपि शब्दश्लेषमात्रेणेत्यर्थः पद्मे इति क्रीडा
याविटो भोक्ता कृष्णो वा पुष्पान्यातुरक्षत्विति संबंधः कीदृश इति उत्स्वप्नवचः स्वप्ने उद्गतमुत्स्वप्नं वचनमार्यात् कृष्णस्य अनुभाष्य अनूद्य राधया निर्भर्त्सितः

मननतत्वचनेनतस्यस्मरमेवअपदिशन्कथयन् इतिकिंहेपद्मेरमेलन्नयनेसततंस्मरामि नीलेभवत्याःकुंतलकेशपाशोममभावोंतःकरणवृत्तिरूपःशुद्धतिमो हंप्राप्नोति ननुचिंतासंगोनिवर्तितातत्राह किंकरोमि अकिंविलकरोस्मियतस्तेतवमहितैःवृत्तैः विभ्रमैर्विलासैः क्रीतोस्मिमूल्येनगृहीतोस्मीति किं करोम्मीतिक्वचित्पाठोयुक्ततरः तत्रवाक्यस्मीत्यहमर्थकमव्ययं अहंकिंकरोदासःक्रीतोस्मीत्यर्थः राधापरत्वेतुहेराधेइत्यर्थात्संबोधनेपद्मरूपेलन्न यनेस्मरामीति विशेषः शेषंपूर्ववत् अत्ररमासंबोध्यकस्तन्नयनस्मरणरूपोनवाकार्थोऽपितुतत्संबोध्यकःपद्मरूपतन्नयनस्मरणरूपइत्यप ह्नवस्तत्स्मरमेवतद्व्यपदिशन्नित्यनेनप्रकाश्यते नचात्रार्थस्यरमाराधासाधारणत्वमपितुपद्मेइतिलिंगवचनश्लिष्टशब्दयोजनैवेति विषयांतरेति

सर्वमिदंविषयांतरयोजनेउदाहरणं विषयैक्येप्यवस्थाभेदेनयोजनेयथा वदंतीजारवृत्तांतंपत्यौधूर्तासखीधिया पतिंबुध्वासखिततःप्रबु
द्धास्मीत्यपूरयत् कैतवापह्नुतिर्व्यक्तौव्याजाद्यैर्निह्नुतेःपदैः निर्यातिस्मरनाराचाःकांतादृक्पातकैतवात् अत्रासत्यत्वाभिधायि
नाकैतवपदेननेमेकांताकटाक्षाःकिंतुस्मरनाराचाइत्यपह्नवप्रतीयते रिक्तेषुवारिक्रिययाविपिनोदरेषुमध्याह्नजृंभितमहातप
तापतप्ताः स्कंधांतरस्थितदवाग्निशिखाछलेनजिह्वाप्रसार्यतरवोजलमर्थयंते संभावनास्यादुत्प्रेक्षावस्तुहेतुफलात्मना ॥

विवक्षितविषयभिन्नेत्यर्थः अवस्थाजाग्रत्स्वप्नादिरूपावदंतीति पत्योर्भर्त्तरिसखीधियासखिभ्रमेणजारवृत्तांतंस्वकामुकवार्त्तांवदंतीधूर्ताकापिपतिंबु ध्वासखीत्यादिवाक्यशेषमपूरयत् पूरितवती सखीतिपुनःसंबोधनमप्रतार्यतास्तवनाय ततःउक्तवृत्तांतानंतरंप्रबुद्धाजागरणवती अत्रनासौजाग्र दवस्थावृत्तांतः किंतुस्वाप्निकइत्यवस्थाभेदयोजनयापह्नवः अस्मीत्यादिवाक्यशेषणप्रकाश्यते कैतवापह्नुतिरितिलक्ष्यनिर्देशः व्याजाद्यैःपदैर्निह्नुते र्व्यक्तौअभिव्यक्तौसत्यांकैतवापह्नुतिरितिव्यवहर्तव्यमित्यर्थः कैतवेनापह्नुतिरितिव्युत्पत्तेः व्याजाद्यैरित्यनेनमिषकपटछललक्ष्मकैतवादयोगृह्यंते ए वंचकैतवादिपदघटितापह्नुतिलक्षणंबोध्यं नाराचाबाणाः दृक्पाताःकटाक्षाः अपह्नवःनिषेधःप्रतीयतइति असत्यत्वस्यविषयबाधाधीनत्वादितिभावः

रिक्तेष्विति ग्रीष्मवर्णने तरवो वृक्षाः वारिणो जलस्य कथया वार्त्तया पि रिक्तेषु शून्येषु विपिनस्यारण्यस्योदरेषु मध्यप्रदेशेषु जलं प्रार्थयन्ते प्रार्थयन्ते कीदृशाः प्रध्माङ्कैर्जृम्भितः प्रवृद्धो यो महानातप उष्णं तस्य तापस्तपनं तेन तप्ताः संतप्ताः किंभूतास्तु स्कंधान्तरात् प्रकांडाभ्यन्तरादुत्थितो यो दवाग्निर्दावानलस्तस्य याः शिखा ज्वालास्तासां छलेन जिह्वाप्रसारयंतीति अस्त्री प्रकांडः स्कंधः स्यान्मूलाच्छाखावधिस्तरोरित्यमरः अत्र नेयं दवाग्निशिखा अपि तु जिह्वेति छलपदात्प्रतीयते अत्र चानभिहितवाच्यतादोषनिरासाय कथयापि वनोदरेष्विति पठनीयं इत्यपह्नुतिप्रकरणं लक्षयति संभावनेति अत्रोत्प्रेक्षेत्यनंतरं सा च त्रिधेत्यध्याहार्यं तथा च संभावना उत्प्रेक्षापदवाच्यास्यात्सा च वस्तुहेतुफलरूपेण त्रिधेत्यर्थः वस्तुहेतुफलानां च संभावनाधर्मत्वं स्वविधेयकत्वसंबंधेन तेन वस्तुहेतुफलविधेय

उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे धूमस्तोमं तमः शंके कोकीविरहशुष्मणां लिंपतीव तमोंगानि वर्षतीवांजनं नभः रक्तौ तवांघ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवं त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति अन्यधर्मसंबंधनिमित्तेनान्यस्यान्यतादात्म्यसंभावनमुत्प्रेक्षा सा वस्तुहेतुफलात्मता गोचरत्वेन त्रिविधा अत्र वस्तुनः कस्यचिद्वस्त्वंतरतादात्म्यसंभावना प्रथमा स्वरूपोत्प्रेक्षेत्युच्यते ॥

कत्वेनेति पर्यवसितार्थः वस्तुत्वं च हेतुत्वेन फलत्वेन वाविवक्षितं यत्तद्भिन्नत्वेनातो वस्तुत्वस्य केवलान्वयितया विभागासंगतिः उक्तेत्यादि अत्र प्रासमुत्प्रेक्षाणां मध्ये आद्या वस्तूत्प्रेक्षा उक्तं चानुक्तं चोक्तानुक्ते आस्पदे यस्या इति विग्रहः आस्पदं चोत्प्रेक्षाया धर्मिरूपो विषयः सिद्धासिद्धेत्यत्र विग्रहः पूर्ववत् धूमेति तमः कोकीविरहशुष्मणां धमस्तोमं शंके इत्यन्वयः कोकस्य चक्रवाकस्य स्त्री कोकी तस्या विरहरूपाणां शुष्मणां अग्नीनां संबंधिनं धूमसमूहमित्यर्थः लिंपतीवेति अत्र तम इति नभ इति च कर्तृपदं रक्ताविव्यादि दयिताप्रति नायकस्योक्तिः तव मृदुलौ सुकुमारौ अंघ्री चरणौ ध्रुवं भुवि विक्षेपणाद्धेतोः रक्तवर्णाविति त्वन्मुखेति पद्मगतायास्त्वन्मुखकांतेरिच्छया हेतुनेत्यर्थः वैरायत इति वैरं करोतीत्यर्थः शब्दवैरकलहाभ्रकण्वमेघेभ्यः करण इति क्यङ् मध्य

धृत्यै धरणार्थं कनकस्य दामभिः रज्जुभिरिति निगीर्याध्यवसानरूपातिशयोक्त्या वल्लीभिः बद्धः किमित्यर्थः प्रायइति अन्नुकर्तृ प्रायः बहुधा लम्बरणे त्रसदेहे कंप्रा
न्तोये जलेत पस्यति तपश्चरतीत्यर्थः कर्मणो रोमंथ तपोभ्यां वर्तिचरो रिति क्यङ तपसः परस्मैपदं चेति परस्मैपदं लक्षणं परिष्कुरुते अन्यधर्मेति अन्यस्य
विषयिणो यो धर्मस्तत्संबंधरूपेण निमित्तेन अन्यस्य अन्यविषयिके अन्यस्य विषयिणः तादात्म्येन संभावनमित्यर्थः अन्यस्येति षष्ठ्यर्थो विषयता धर्मिता
रूपा विषयिण इति षष्ठ्यर्थस्तु विशेषणतारूपा विषयता अन्यत्वेनोत्कीर्तनं च संभावनायां आहार्यता सूचनाय तथा च विषयिनिष्ठधर्मसंबंधप्रयुक्त वि
षयधर्मिकं तादात्म्यसंसर्गेण विषयि विधेयकमाहार्यसंभावनमुत्प्रेक्षेति पर्यवसितं तन्निष्ठधर्मसंबंधप्रयुक्तमाहार्यतत्संभावनमिति तु निष्कर्षः इ
तरो ऽशस्याव्यावर्तकतया स्वरूपकथनमात्रपरत्वात् मुखं चंद्रमन्य इत्युत्प्रेक्षायां चंद्रनिष्ठाह्लादकत्वादिधर्मसंबंधप्रयुक्तं मुखे चंद्रसंभावनमाहार्यमस्तीति

अहेतो हेतुभावेनाफलस्य फलत्वेनोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षेत्युच्यते अत्र आद्या स्वरूपोत्प्रेक्षा उक्तविषयानुक्तविषया चेति द्वि
विधा परे हेतुफलोत्प्रेक्षे सिद्धविषयाऽसिद्धविषया चेति प्रत्येकं द्विविधे एवं षण्णामुत्प्रे क्षाणां धूमस्तोमेत्यादीनि क्रमेणोदाहरणानि

लक्षणसमन्वयः बाधाद्यभावदशायां तु जायमाना मुखादौ चंद्रादिसंभावना नोत्प्रेक्षेति तद्वारणायाहार्येति एतेन विरक्तसंध्यापरुषं पुरस्ताद्यथा रजः पार्थिवमुज्जि
हीते शंके हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्य इत्यत्र रजोभरो द्गमनरूपससैन्यप्रत्युद्गतृधर्मसंबंधप्रयुक्ता या भरते तत्संभावनायामपि नातिव्याप्तिः तस्या
अनाहार्यत्वात् संभावने यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धय इति वक्ष्यमाणसंभावनालंकारविषये यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तवेत्यादावतिव्याप्तिवा
रणाय प्रयुक्तान्तं सर्वातिशायिसौंदर्यशंके सत्त्ववतां सुखयेन सा मृगशावाक्षी सावित्रीतरलीकृते त्यादावतिप्रसंगवारणाय तन्निष्ठेति संभाव्यमानवृत्ति धर्मविशेषणं
तत्र सावित्रीतरलीकारकत्वरूपो धर्मो मुखवृत्तिर्न तु संभाव्यमानवृत्तिरिति नातिप्रसंग इति दिक् वस्तुहेतुफलात्मता वस्तुहेतुफलतादात्म्यं ननु संबंधांतरेणोत्प्रेक्षा
या असंग्रह इति चेन्न सर्वत्राभेदेनैवोत्प्रेक्षणमिति प्राचीनमतानुसारेणेत्थमभिधानात् एतल्लक्षणनायैव लक्षणे अत्र तादात्म्यापादानमिति नन्वलंकारसर्वस्वकारादिभिः
स्वरूपोत्प्रेक्षेति व्यवहृता याः स्तुरीयायां अपि स

अत्रेति व्यासांमध्येयाप्रथमावस्तूत्प्रेक्षाद्वैवस्वरूपोत्प्रेक्षेत्युच्यतइत्यर्थः विसृत्वरस्येतिप्रसरणशीलस्येत्यर्थः तमसइति संभावेनेत्यनेनान्वेति षष्ठ्यर्थोविषय॥
ता तमोविषयेत्यर्थः प्रतिरोधकत्वादीत्यादिपदात् प्रसरणशीलत्वस्य संग्रहः प्रियैः पतिभिर्विघटिताविरहिताः व्यापनस्येतिषष्ठ्यंतस्यपूर्ववदुत्प्रेक्षाप्रदे॥
नान्वयः एवमग्रेतनस्यतमसइत्यस्यापि अनुपादानादितिविषयिवाचकाभ्यांलिंपतिवर्षतिभ्यामन्येनानुपदानादित्यर्थः यथाश्रुतेताभ्यामेवसाध्यवसान

इजनीमुखेसर्वत्रविसृत्वरस्यतमसोनैल्यदृष्टिप्रतिरोधकत्वादिधर्मसंबंधेनगम्यमानेननिमित्तेनसद्यःप्रियविघटितसर्वदेशस्थि
तकोकांगनाहृदुपगतमज्वलितस्थिरहानलधूमस्तोमतादात्म्यसंभावनास्वरूपोत्प्रेक्षा तमसोविषयस्योपादानादुक्तविषया तमो
व्यापनस्यनभःप्रभृतिभूपर्यंतसकलवस्तुसांद्रमलिनीकरणेननिमित्तेनतमःकर्तृकलेपनतादात्म्योत्प्रेक्षानभःकर्तृकांजनवर्षण
तादात्म्योत्प्रेक्षावानुक्तविषयास्वरूपोत्प्रेक्षा उभयत्रापिविषयभूततमोव्यापनस्य अनुपादानात् नन्वत्रतमसोव्यापनेननिमित्तेन
लेपनकर्तृतादात्म्योत्प्रेक्षानभसोभूपर्यंतगाढनीलिमव्याप्तत्वेननिमित्तेनांजनवर्षणकर्तृतादात्म्योत्प्रेक्षावेतिउत्प्रेक्षाद्वयमुक्तविषय
मेवास्तु मैवंलिंपतिवर्षतीत्याख्यातयोःकर्तृवाचकत्वेपिभावप्रधानमाख्यातमितिस्मृतेर्धात्वर्थक्रियायाएवप्रधान्येनतदुपसर्जनत्वे
नान्वितस्यकर्तुरुत्प्रेक्षणीयतयाअन्यत्रान्वयासंभवात् अतएवाख्यातार्थस्यकर्तुःक्रियोपसर्जनत्वेनान्यत्रान्वयासंभवादेवास्योप
मायामुपमानतयान्वयोपिदंडिनानिराकृतः कर्तायस्तुपमानंस्यान्न्यग्भूतोसौक्रियापदे स्वक्रियासाधनव्यग्रोनालमन्यदपेक्षितु॥
मितिकेचित्तु तमोनभसोर्विषययोस्तत्कर्तृकलेपनवर्षणास्वरूपधर्मोत्प्रेक्षेत्याहुः
लक्षणयोपादानादसंगतेःउक्तविषयमेवेतिसदुच्चरिता॥
भ्यांलिंपतिवर्षतिभ्यांशक्त्यालेपनवर्षणयोः साध्यवसानलक्षणयावसाधारणधर्मपुरस्कारेणव्यापनस्यवोपस्थापनस्ययुगपद्वृत्तिद्वयविरोधेनासंभवादि
त्याशयः स्मृतेः निरुक्तस्मृतेःउत्प्रेक्षणीयतयाउत्प्रेक्षाविषयतया अन्यत्र उत्प्रेक्षायां अन्वयसंभवादितिनिराकांक्षत्वादिभावः अतएव आख्यातार्थस्यकर्तुः

क्रियोपसर्जनत्वनान्वयान्वयासंभवादेवः क्वचिदत एवेत्युत्तरं अयमेवव्याख्यानग्रंथः प्रमादलिखितो दृश्यते न्यग्भूतेति गुणभूत इत्यर्थः स्वक्रियेति क्रियां
प्रति साधनत्वेनान्वित इत्यर्थः अपेक्षितुं आकांक्षितुं नालं न समर्थः तथा च निराकांक्षत्वादुपमानत्वेनान्वयो न संभवतीति भावः एतेन तमस्त्रिलेपनकर्तृत्वमु
त्प्रेक्ष्यमिति अलंकारसर्वस्वकारमतमपास्तं तस्यापि कर्तृविशेषणत्वात् विवक्षितविवेकेन लेपनस्यैवोत्प्रेक्ष्यत्वाच्च एवं च प्रधानभूतलेपनक्रियागोचराभा
वेनैव निगीर्णमापन्नविषयेति सिद्धं नच युगपद्वृत्तिद्वयविरोधः शंक्यः तदनभ्युपगमात् केचिदिति तमइति वास्वरसोद्भावनं तद्बीजं तु तमोनभसोः क
र्तृत्वेन विषयत्वेन च वारद्वयमन्वयक्लेशः तथाधर्मस्योत्प्रेक्षा साधर्म्यप्रयुक्ता धर्मोत्प्रेक्षा तु तत्सहचरितधर्मसंबंधप्रयुक्तेति लक्षणानुगमः नच तन्निष्ठत

त्तन्मते स्वरूपोत्प्रेक्षायां धर्मस्योत्प्रेक्षा धर्मोत्प्रेक्षा चेत्येवं द्वैविध्यं द्रष्टव्यं चरणयोः स्वतः सिद्धेरक्तिमनि वस्तुतो विक्षेपणं न हेतुरिति अहे
तोस्तस्य हेतुत्वेन संभावना हेतूत्प्रेक्षा विक्षेपणस्य विषयस्य सत्त्वात् सिद्धविषया चंद्रपद्मविरोधः स्वाभाविकेनापि कावदनकांतिप्रशमानहे
तुरिति तत्र तद्धेतुत्वसंभावना हेतूत्प्रेक्षा वस्तुतस्तद्विरोधस्याभावादसिद्धविषया मध्यः स्वयमेव कुचौ धरति न तु कनकदामवंधत्वेना।
ध्यवसिता यावल्लित्रयशालितायावलादिति मध्यकर्तृककुचधृतेस्तत्फलत्वेनोत्प्रेक्षा सिद्धविषया फलोत्प्रेक्षा जलजस्य जलावा
स्थितेरुद्वासतपस्त्वेनाध्यवसितायाः कामिनीचरणसायुज्यप्राप्तिर्न फलमिति तस्या गगनकुसुमायमानायास्तपःफलत्वेनोत्प्रे
क्षणात् असिद्धविषया फलोत्प्रेक्षा अनेनैव क्रमेणोदाहरणांतराणि

समानाधिकरणान्यतरत्वेन धर्मनिवेशान्नाननुगमइति वाच्यं सर्वत्र साह
रूप्यनिमित्ताया एवोत्प्रेक्षायाः संभवेनान्यतरत्वादिनिवेशप्रयुक्तगौरवस्यानुपादेयत्वादिति हेतुत्वेनेति हेतुरूपतयेत्यर्थः हेतुत्वसंभावनाहेतुरूपतासंभावना फलत्वे
न फलरूपतया एवमग्रेपि बोध्यं अथोदाहृतासूत्प्रेक्षासु बोधप्रकारः प्रदर्श्यते तत्र धूमस्तोममित्यादौ काकांगनाविरहानलसंबंधिधूमस्तोमाभिन्नतमोविषया
यासंभावनेति बोधः नामार्थयोरभेदान्वयात् एवं मुखं चंद्रं मन्य इत्यादावपि नूनं मुखं चंद्र इत्यादौ तु चंद्रप्रकारकसंभावनाविषयामुखमिति बोधः मुखविषया

कु.टी.
चं.
५९

रात्राविति समर्कांतः प्रभुर्भूपतिर्भूमौ रात्रौ रवेरभावाद्धेतोर्दिवा चंद्रस्याभावाद्धेतोर्दिवस ततं निरंतरमुदितप्रतापयशसी सृष्टवान्निर्मितवान् नित्यर्थः रक्ताविसुर।
हरणे भावस्यैव हेतुरिह त्वभावस्य इति भेदः दिवस्वतेति विवस्वता सूर्येण स्वस्य गोसहस्रेण किरणसहस्रेण समं मिश्राः मिश्रिताः जनानां गाः नेत्रापरनामधेया गा
वोपि अनायिषत नीता इव यथा गोपालेन परकीयाभिर्गोभिर्मिश्राः स्वीया गावो नीयंते तथा गोपदवाच्यत्वसाजात्येन मिश्रिता विवस्वतापि नीता इवेत्यर्थः
खलु संभावनायां तेन नयनेन हेतुना इदं माध्यं नक्तं धकारैः रित्यन्वयः गोः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् स्त्री सौरभेयी दृग्बाणांबुवाग्भूष्वप्सु भूम्नि च
ति मेदिनी अत्र वा नायिषतेवेति विषयोत्प्रेक्षणपूर्वकं तस्य हेतुत्वेनोत्प्रेक्षणमिति पूर्वस्माद्भेदः एवं पूर्वत्र इत्युपेति गुणरूपो हेतुरिह तु क्रियारूप इत्यपि द्रष्टव्यं

रात्रौ रवेर्दिवा चंद्रोरभावाद्दिवसः प्रभुः भूमौ प्रतापयशसी सृष्टवान् सततोदिते रात्रौ रवेर्दिवा चंद्रस्याभावः सन्नपि प्रतापयशसोः सर्गे न हे
तुरिति तस्य तद्धेतुत्वसंभावनासिद्धविषया हेतूत्प्रेक्षा विवस्वतानायिषतेव मिश्राः स्वगोसहस्रेण समं जनानां गावोपि नेत्रापरनामधे
यास्तेनेदं माध्यं खलु नांधकारैः अत्र विवस्वताकृतस्य किरणैः सहजनलोचनानां नयनभ्रमस्य देवरात्रावांध्यं प्रति हेतुत्वेनोत्प्रेक्ष्यत इति अ
सिद्धविषया हेतूत्प्रेक्षा पूर्वं विधुर्वर्द्धयितुं पयोधेः शंकेयमेणाकमणिं कियंति पयांसि दोग्धि प्रियविप्रयोगे सशोककोकीनयने कियं
ति अत्र चंद्रेण कृतस्य समुद्रस्य बृंहणमदवत्तदा तेन कृतस्य चंद्रकांतद्रावणस्य कोकांगनाबाष्पस्रावणस्य च फलत्वेनोत्प्रेक्ष्यत इति सिद्धविष
यफलोत्प्रेक्षा रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् उत्पत्तिभूमौ

अत्र चोत्प्रेक्षाद्वयसत्त्वेपि हेतूत्प्रेक्षायाः प्राधान्यात्तत्त्वेन व्यपदेशो न तु स्वरूपोत्प्रेक्षात्वेन तस्याः अंगत्वात् एवमन्यत्रापि बोध्यं पूर्वमिति अयं विधुश्चंद्रः पयोधेः
पूरं वर्द्धयितुं एणाकमणिं चंद्रकांतं कियंति लोकोत्तरतया अपरिमितानि पयांसि दोग्धीति शंके तथा प्रियैः पतिभिर्विप्रयोगे वियोगे सति सशोकानां कोकांगनानां नय
ने कर्मभूते कियंति पयांसि दोग्धीति शंक इत्यन्वयः दुहेर्द्विकर्मकत्वादेणाकमणिमिति द्वितीया एवं नयने इत्यत्रापि मध्यः किमित्यत्र कस्य वर्द्धनस्य फलत्वेन कुवध
ते रुत्प्रेक्षणमिह तु द्रावणस्रावणयोर्द्वयोः फलत्वे न पूर्ववर्धनस्य तदिति भेदः बृंहणं वर्द्धनं तदा वर्द्धनकाले तेन चंद्रेण रथस्थितानामिति रविः रथस्थितानां निपु

कानां वाहनानामश्वानां परिवर्तनायेव तुरगोत्तमानामुत्पत्तिभूमावुत्तरस्यां दिशि प्रतस्थ इत्यन्वयः प्रायो नूनमित्यनयोर्नैक्यस्य गुणस्य फलत्वेनोत्प्रेक्षणमिति तुरगपरिवर्तन क्रियाया इति भेदः ननु अलंकारसर्वस्वकारादिभिरन्येषामपि जात्यादिभेदानामुक्तत्वात्कुतस्तेन प्रदर्शिता इत्याशंक्याह एता एवेति उक्तभेदा एवेत्यर्थः उत्प्रेक्षान्तरे नेतरे चमत्कारविशेषप्रयोजिका इति शेषः तथा च जात्यादिभेदानां चमत्कारविशेषानाधायकत्वादप्रदर्शनमिति भावः इत्युत्प्रेक्षेति इत्यनेनोत्प्रेक्षाबोधकत्वेने त्यर्थः त्वत्कीर्तिरिति अत्रानुपात्तस्वर्गगमनविषया स्वर्गंगाप्रवेशतादात्म्योत्प्रेक्षा विशेषणीभूतभ्रमणश्रान्तत्वरूपहेतूत्प्रेक्षावाप्रतीयत इति बोध्यं इति श्रीमत्तत्सदुपाख्यवैद्यनाथकृतायामलंकारचंद्रिकायां श्रीमत्कुवलयानंदटीकायामुत्प्रेक्षाप्रकरणं अतिशयोक्तिं लक्षयति रूपकातिशयोक्तिरिति ग्रहणाउपस्था

अत्रोत्तरायणस्याश्वपरिवर्तनमसदेव फलत्वेनोत्प्रेक्ष्यत इति असिद्धविषया फलोत्प्रेक्षा एता एवोत्प्रेक्षाः मन्ये शंके ध्रुवं प्रायो नूनमित्येव मादिभिः उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोपि तादृशः इत्युत्प्रेक्षाव्यंजकत्वेन परिगणितानां शब्दानां प्रयोगे वाच्याः तेषामप्रयोगे गम्योत्प्रेक्षा यथा त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगां रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः पश्य नीलोत्पलद्वंद्वान्निःसरंति शिताः शराः विषयस्य स्वशब्देनोल्लेखनं विना विषयिवाचकेनैव शब्देन ग्रहणं विषयनिगरणं तत्पूर्वकं विषयस्य विषयिरूपतया

ध्यवसानमाहार्यनिश्चयस्तस्मिन्सति रूपकातिशयोक्तिः

यनं विषयिरूपतयेति विषयिणो रूपमस्य तस्य भावस्तत्ता तयेत्यर्थः रूपं चाभेदताद्रूप्यान्यतरत् तस्मिन्सतीति सप्तमी समर्थान्तस्मिन्नित्यभिप्रायेण एवं चानुपात्तविषयधर्मिकाहार्यनिश्चयविषयीभूते विषय्यभेदताद्रूप्यान्यतरत्वं रूपकातिशयोक्तिरिति लक्षणं बोध्यं अत्र रूपकवारणायानुपात्तेति अयमेव च रूपकादस्या विशेषः निश्चय इत्युच्यते भ्रान्तिवारणायाहार्येति उत्प्रेक्षावारणाय निश्चयेति नीलोत्पलेति अत्र नीलोत्पलपदात् साध्यवसानलक्षणया शक्यलक्ष्योभयानुगतकांतिविशेषादिपुरस्कारेणोपस्थिते कामिनीनयने शक्त्युपस्थितस्य नीलोत्पलत्वविशिष्टस्याभेदसंसर्गेणान्वयः शक्त्युपस्थितयोः कृतीष्टसाधनतयोरिव शक्तिलक्षणाभ्यामुपस्थितयोरप्येकपदार्थयोस्तात्पर्यवशेनान्वयांगीकारे बाधकाभावात् एवं च नीलोत्पलाभिन्नकांतिविशेषवद्द्वन्द्वादिति बोधादयमभेदाति

रूपके विषयिभेदमात्रस्य विषयतावच्छेदकस्य मानेन तद्वैलक्षण्यस्य स्फुटत्वात् यदा तु भेदभाने तात्पर्यं किं तु भेदभाने तदा कान्तिविशेषादिरूपताद्रूप्यस्यैव बाधा ताद्रूप्यातिशयोक्तिर्वक्ष्यते इति बोध्यं वापीति मध्यभागमारभ्य मुखपर्यन्तं नायिकागवर्णनमिदं गगने सूक्ष्मतया तत्त्वं दुर्लक्ष्ये मध्ये कापि अनिर्वचनीयशोभा वापी तद्गम्भीरनाभिः स्फुरति शोभते तस्य तदूर्ध्वभागे ऐन्द्रनीली इन्द्रनीलपटिता सूक्ष्मपद्यासरणिस्तद्गतश्यामा रोमावली स्फुरतीत्यनुषज्यते किंभूतां काञ्चननिर्मितां सोपानपङ्क्तिं तत्स्थ शोत्रिवलीमधिगतवती प्राप्तवती तथा अग्रे तदूर्ध्वदेशे शैलौ तद्वत्तुङ्गविशालौ कुचौ स्फुरत इति विभक्तिपरिणामेनानुसंबध्यते कीदृशौ सुकृतिना पुण्यकृता सुगमौ सुलभगमनौ सुलभौ च पुनः कीदृशौ चन्दनतरुभिश्चन्दनपङ्केन वा छन्नौ व्याप्तौ देशाय योस्तथाभूतौ तत्रत्यानां

यथा नीलोत्पलशब्दाभ्यां लोचनयोः कटाक्षाणां च ग्रहणपूर्वकं तद्रूपताध्यवसानं यथा वा वापीकापि स्फुरति गगने तत्परं सूक्ष्मपद्यासोपानाली मधिगतवती काञ्चनी मैन्द्रनीली अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ तत्रत्यानां सुलभममृतं सन्निधानात्सुधांशोरत्र त्र वाप्यादिशब्दैर्नाभिप्रभृतयो निगीर्णाः अत्रातिशयोक्तौ रूपकविशेषणं रूपके दर्शितानां विधानामिहापि संभवोस्तीत्यतिदेशनप्रदर्शनार्थं तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यं द्रष्टव्यं तत्राप्याधिक्यन्यूनताविभागश्चेति सर्वं मनुसं

तदाश्लिष्टानां च सुधांशोस्तद्वदाह्लादकस्य मुखस्य सन्निधानादमृतं तद्वदास्वाद्यमधरमाधुर्यं सुलभमित्यन्वयः विधानां भेदानां इतीत्यस्य प्रदर्शनार्थमित्यनेनान्वयः अतिदेशेनेति सादृश्येनेत्यर्थः मुख्यरूपकाभेदस्यापि शयोक्तावभावाद्रूपकपदं रूपकसदृशपरं षण्मासमग्निहोत्रं जुहोतीत्यत्राग्निहोत्रपदवद्धर्मातिदेशकमित्याशयः आधिक्यन्यूनतेत्यत्रोभयोरप्येकैकोदाहरणेषु प्रसिद्धतरत्वादनुपादानं बोध्यं यत्तु केचिदुक्तं विषयिवाचकपदस्य विषये साध्यवसानलक्षणायाः शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधफलकार्यतावच्छेदकं एवं च निगरणं सर्वत्र विषयतावच्छेदकधर्मरूपेणैव विषयस्य भानेन विषय्यभिन्नत्वेन तिरस्थितः भेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यमयुक्तमिति तत्सौढिविलसितं शक्यतावच्छेदकस्य लक्ष्ये पूर्वमप्रतीतत्वेन

यद्धर्मविशिष्टशक्यसंबंधग्रहस्तद्धर्मप्रकारकलक्ष्योपस्थितेः समानप्रकारकशाब्दबोधहेतुत्वात् लक्षणापरिहार्या या अनुपपत्तेस्तदवस्थत्वाच्च एवमपि तात्पर्यवशा
तादृशबोधांगीकारे तद्वशादेव शाक्याभेदप्रकारकबोधेपि बाधकाभावान्मानपदेन विषयतावच्छेदकस्यैव आयत्तेनादिति दिक् सुधाबद्धेति विद्धशालभंजिकास्था
यांस्फटिकप्राकारशिखरगतां मृगांकावलोमालोकयतो राज्ञो विदूषकस्य स्तुतिरियं प्राकाराग्रसमीपे नयने प्रहिणप्रेरय मनाक् ईषत् तर्कय अनाकाशे अकं नरिक्षे को
यं शीतकिरणश्चंद्र इति मुखे चंद्रगताल्हादकारित्वरूपतादूप्याध्यवसाने कीदृशः गलितश्च्युतो हरिणो यस्मात् तथाभूतः तेन तिः कलंकतयोत्कर्षाभिव्यक्तिः पुनः
कीदृक् सुधापावद्धः ग्रासास्तदभिलाषोपेतैरुपवनसंवधिभिश्चकोरैरनुसृतां लवल्याः फलपाकस्य प्रणयिनीं सदृशीं अच्छामच्छां ज्योत्स्नात्वेनाध्यवसितां का
नारिकायां ३ चु·

यथा वा सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां किरञ्ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीं उपप्राकाराग्रं प्रहिणु नयने तर्कय मनागनाका
शे कोयं गलितहरिणः शीतकिरण इत्यत्र कोयमित्युक्त्या प्रसिद्धचंद्राद्भेदस्तात उत्कर्षश्च गर्भितः एवमन्यत्राप्यूहनीयं यद्यपह्नुतिगर्भ
त्वस्यैव सापह्नवामता त्वत्सूक्तिषु सुधाराजन्मभ्रांताः पतंति ताविधौ अत्र त्वत्सूक्तिमाधुर्यमेवामृतमित्यतिशयोक्तिः चंद्रमंडलस्थ
ममृतं न भवतीत्यपह्नुतिगर्भा यथा वा मुक्ताविद्रुममंतरा मधुरसः पुष्पं परं भूर्वहं पाले पुत्पुतिमंडलेरवलु तयोरेकास्ति कानार्णवे

तिं प्रभां किरन् प्रसारयन्नित्यर्थः लवलीलताविशेषो हरफारेवडीति भाषाप्रसिद्धः प्राकारो वरणः शालदृत्यमरः समावद्धग्रासैरिति क्वचित्पाठस्तत्राप्युक्त एवार्थः
नवलवलीति पाठे नवश्चासौ लवलिपाकश्चेत्यन्वयो बोध्यः ननु विद्याभेदविवक्षैव किं न स्यादत आह अत्रेति कोयमित्यनेनानिर्ज्ञातत्वप्रकाशनात्प्रसिद्धस
निर्ज्ञातत्वात् तद्भेदलक्षण्यावगतिरिति भावः गर्भितः गलितेत्यादिविशेषणांशस्यत्वेनाभिप्रेतः अन्यत्रापीति अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः कलंकेना
श्लिष्टो नखलु पतिभूतो दिनकृता कुहूभिर्नो लुप्तो न च युवतिवक्त्रेण विजितः कलानाथः कोयं कनकलतिकायामुदपतदित्यादावित्यर्थः अथवान्यत्रापि न्यूना
नापादनीयत्यर्थः कोयं भूमिगतश्चंद्र इत्यादावदिव्यत्वरूपन्यूनताप्रकाशनान्यूहनीयमिति भावः ननु कोदाहरणे पद्यमिति विषयस्योपादानात्कथमतिशयोक्तिरि

मयाहुः दूदंलस्यविषयिविशेषणत्वेन विवक्षायामतिशयोक्तिरेव यदा तु विषयविशेषणत्वे विवक्षा तदा रूपकमिति व्यवस्था अत एव प्रकाशकृता दृढालंकारा तिशयोक्त्यादिसंदेहसंकरत्वेनानंददायीदो बिंबमेतन्नभसीदत्तोऽसुदाहृतमिति एनामभिजते यद्यपह्नुतीति अपह्नुतिगर्भत्वं पर्यस्तापह्नुतिगर्भत्वं सैव रूपकातिशयोक्तिरेव तथान सापह्नववत्त्वनिरपह्नववत्त्वभेदेन द्विविधातिशयोक्तिरिति भावः मुक्तेति तान्यनुभवैकवेद्यानि इमानि वस्तूनि तेइमेजनाः विकल्पयंति स्वसद्भूतविकल्पविषयाणि कुर्वंति येषांजनानां साप्रक्रांता सुंदरी दृक्पथलोचनभागंनास्तीत्यन्वयः तादृशसुंदरीदर्शनशालिनस्तु विकल्पयंतीति भावः तानि कानि वस्तूनि तत्राह मुक्तामौक्तिकं विद्रुमं प्रवालं चांतराअनयोर्मध्ये मधुररसः अंतरांतरेणयुक्तेइति द्वितीया पुष्पं परं केवलं धूर्वहं भारवाहकं न तु मधुरसयुतं

तच्चोदंचति शंखमूर्ध्नि न पुनः पूर्वाचलाभ्यंतरे तानीमानि विकल्पयंति तइमे येषांन सा दृक्पथे अत्राधररस एव मधुररस इत्याद्यतिशयो क्तिः पुष्परसो मधुरसो न भवतीत्यपह्नुतिगर्भा अलंकारसर्वस्वकृता स्वरूपोत्प्रेक्षायामपह्नववत्त्वमुदाहृतं गतासु तीरमितिमिषपदेन ससंभ्रमं पौरविलासिनीषु यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहास इव विभाति शिप्रा नतत्स्वियानत्र भेदः एतत्तु भुग्गापह्नुतिगर्भं यत्र फेनततित्वमपह्नुतं तत्रैवाट्टहासत्वोत्प्रेक्षणादिहेतु पर्यस्तापह्नुतिगर्भत्वमिंदुमंडलादावपह्नुतस्यामृतादेः सत्त्वादिश्रुतिनिवेशनात् इदं च पर्यस्तापह्नुतिगर्भत्वमुत्प्रेक्षायामपि संभवति तत्र स्वरूपोत्प्रेक्षायां यथा ज्ञानेति रागादिदमेव विविवविवस्पष्टव्यक्तमितोऽधरत्व द्वयोर्विशेषावगमाक्षमाणां नाम्निभ्रमो भ्रमदनयोजनानां ॥

तयोर्मुक्ताविद्रुमयोः खलु निश्चितं प्राले यद्युतिमंडलेचंद्रमंडलेएकासिका एकस्मिन्नासिका अवस्थितिः ऐकाधिकरण्यमित्यर्थः न तु लवणे वसमुद्रे तच्चचंद्रमंडलं च शंखस्य मूर्धि मस्तके उदंचति उदयं प्राप्नोति न पुनः पूर्वाचलस्योदयगिरेरभ्यंतरे उदंचति अत्र मुक्ताविद्रुममधुररसप्रालेयद्युतिमंडलशंखशब्दैःक्रमेण दंताधरतन्माधुर्यमुखकंठानि गोयाः पूर्वोदाहरणांतत्वोक्त्यास्पष्टोपह्नवः इह तु परं धूर्वहमित्युक्त्या गूढ इति भेदः प्रालेयमिहिकावेत्यमरः गतासुस्तिति रेभवाः पौरस्त्रासु विलासिनीषु तिमीनां मत्स्यानां संघट्टनेन संभ्रमं संभ्रमयन्तीरं प्रतिगतासु मत्तीक्षुयत्र नगर्यां शिप्रानदी उल्लसंतीनां फेनततीनां छलेन मुक्तः कृतः अट्टहासः उद्धतहास्यं यया तया अट्टनदनिनादितया

मत्त्वादिष्विति सूक्तिमाधुर्यादिष्वित्यर्थः आदिना अधरमाधुर्यपरिग्रहः निवेशनात् अभेदाध्यवसानात् जाने इति दमयन्तीवर्णनपरतो नलस्योक्तिः अतिशायिता
द्रागादेर्न्यो हीत्यादि इदमधरस्वरूपमेव बिम्बमिति जानेन तु बिम्बफलमित्येवकारार्थः बिम्बस्य बिम्बफलस्यातोऽस्मादोष्ठादधरत्वं निकृष्टत्वं स्फुटं कथं तर्हि बिप
रीताल्लोके प्रसिद्धिस्तत्राह द्वयोरनयोर्बिम्बोष्ठस्य तारतम्यस्यावगमे बोधे क्षमाणामसमर्थानां जनानां नाम्नि भ्रमो विपर्यास अभूदिति अन्यत्रेति स्र
र्यकन्दुकेनेत्यापरपर्यायगोनयनेनेत्यर्थः निवेशिते उत्क्षिप्ते रवीति रविणा सततं सोगजः तस्य रवेर्गृहस्थानं पद्मान्वधूनिति यावत् एवंप्रायो बाधितुं सरः
प्रविशतेन तुल्यानुल्लाना येहि यस्मात् गजस्य स्थाने निष्फलं निःप्रयोजनमित्यन्वयः प्रसक्तानुप्रसक्त्येति अतिशयोक्तेः सापह्नवत्वकथनप्रसंगादलंकारस

अत्र प्रसिद्धफले बिम्बतामपह्नुत्यातिरागेण निमित्तेन रदसमयं त्वधरे तदुत्प्रेक्षापर्यस्तापह्नुतिगर्भा हेतूत्प्रेक्षा यो तद्गर्भत्वं प्राक् लिखितेह
तूत्प्रेक्षोदाहरण एव दृश्यते तत्र बाधकारेखाध्यहेतुत्वमपह्नुत्यान्यत्र तन्निवेशितफलोत्प्रेक्षायां यथा रवितप्तो गजः पद्मान्तं स्थानं वा
धिं तु ध्रुवं सरो विशति न स्नातुं गजस्नानं हि निष्फलं अत्र गजस्य सरःप्रवेशं प्रति फले स्नाने फलत्वमपह्नुत्य पद्मबाधने तन्निवेशितं
अलमनया प्रसक्त्या          न प्रसक्त्या प्रकृतमनुसरामः भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनं अन्यदेवास्य गाम्भीर्यमन्यद्धैर्यम
हाप्रतेः अत्र लोकप्रसिद्धगाम्भीर्याद्यभेदेऽपि भेदो वर्णितः यथा वा अन्यैव रूपसंपत्तिरन्या वैदग्ध्यधोरणी नैषा नलिनपत्राक्षी सृष्टिः सा

वेधसः इत्युक्तेः स्वरूपोत्प्रेक्षायामुद्दापह्नुतिगर्भत्वं दर्शितं तदनुप्रसक्त्या च त्रिविधास्वप्युत्प्रेक्षासु पर्यस्तापह्नुतिगर्भत्वमित्यर्थः भेदकेति तस्यैव तज्जातीयस्यैव अन्य
त्ववर्णनं तज्जातीयभिन्नत्वेन वर्णनं तच्चाहार्यबोध्यं एवमग्रेपि तेन भ्रान्तौ नातिव्याप्तिः इदं च लोकोत्तरत्वप्रतिपत्त्यर्थं अन्यदेवेति अस्य महीपतेर्गाम्भीर्यं अन्य
देव प्रसिद्धगाम्भीर्यभिन्नमेवेत्यर्थः अन्यैवमिति रूपसौन्दर्यवैदग्ध्यं चातुर्यधोरणी परिपाटी एषा नलिनपत्राक्षी विधेः साधारणी सृष्टिर्नैवेत्यन्वयः अत्रो
तराधेन अभंग्यान्यत्ववर्णनं विशेषः संबंधेति अयोगेऽसंबन्धे योगकल्पनं संबन्धवर्णनं संबन्धश्चाभेदभिन्नत्वे सत्यन्यत्वाद्यनिरूपितो ग्राह्यः तेन रूपकातिश
योक्त्यादिप्रभेदस्य नातिव्याप्तिः सौधेति सौधोऽस्त्री राजसदनमित्यमरः नन्वत्रैव स्पृशन्तीन्दुमण्डलमितीव पदप्रयोगे उत्प्रेक्षा प्रतीतेः तदप्रयोगे गम्योत्प्रेक्षात्वमुचित

कु॰टी॰
चं॰
२२

द्ववादिसत्वेयावाच्योत्प्रेक्षासेवेवाघभावेगम्योत्प्रेक्षेतिनियमात् अन्यथात्वत्कीर्तिर्भ्रमणश्रांतेत्यादिपूर्वोदाहृते पद्येपिगम्योत्प्रेक्षानस्याद्विशेषाभावादितिचत्
मेवे उपदर्शितनियमस्यालंकारांतराविषयएवाभ्युपगमात् अन्यथानूनंमुखंचंद्र इत्यादौनूनमित्यप्रयोगेगम्योत्प्रेक्षापत्तेः एवंचप्रकृतेसंवंधेसंवंधवर्णनरूपाति
शयोक्त्यलंकारविषयेनगम्योत्प्रेक्षावसरः त्वत्कीर्तिरित्युदाहरणेतुभ्रमणश्रांतत्वरूपहेतुत्वेनोगम्योत्प्रेक्षाभिप्रेतानतुस्वर्गंगाप्रवेशांश इतिसर्वमवदातं असंदि
ग्धमुदाहरणांतरमाह यथावेति कतिपयेति वीररुद्रदेवाख्येनृपेवितरणशालिनिदानशालिनिसतिचक्रवाकी इतिमुदंसंतोषमुपयातिप्राप्नोति इतिकिंकृ
तेवासरस्यावसानेनाशोयेनसः कनकगिरिः सुमेरुः कतिपयैरल्पैर्दिवसैःक्षयंप्रयायादिति संभावनायांलिङ् योगेपीति योगेसत्यप्ययोगवर्णनमित्यर्थः स्व

संवंधातिशयोक्तिः स्यादयोगेयोगकल्पनं सौधाग्राणिपुरस्यास्यस्पृशंतिविधुमंडलं यथावा कतिपयदिवसैःक्षयंप्रयात्कनकगिरिः
कृतवासरावसानः इतिमुदमुपयातिचक्रवाकीवितरणशालिनिवीररुद्रदेवे अत्रचक्रवाक्याः सूर्यास्तमयकारकमहामेरुक्षयसंभाव
नाप्रयुक्तसंतोषासंवंधेपितत्संवंधोवर्णितः योगेप्ययोगोऽसंवंधातिशयोक्तिरितीर्यते त्वयिदातरिराजेंद्रस्वर्द्रुमान्नाद्रियामहे अत्र
स्वर्द्रुमेष्वादरसंवंधेपितदसंवंधोवर्णितइति असंवंधातिशयोक्तिः यथावा अनयोरनवद्यांगिस्तनयोः अवकाशोनपर्याप्तस्तववाहुल
तांतरे अक्रमातिशयोक्तिःस्यात्सहत्वेहेतुकार्ययोः आलिंगतिसमंदेवज्यांशराश्चपराश्वते अत्रमौर्व्योपदाशरसंधानंतदानीमेव
शात्रवःक्षितौपततीतिहेतुकार्ययोः
योर्ज्रंभमाणः इ॰ च॰

गस्याद्रुमाः कल्पवृक्षादयः स्वर्द्रुमेष्विति विषयसप्तमी स्वर्द्रुमविषयेयआदरस्तस्यसंवंधेपि अर्थादर्थिषु यद्वा
अर्थिषुस्वर्द्रुमेविषयादरसंवंधाभावप्रतीतौतत्समानवित्तिवेद्यतयास्वर्द्रुमेष्वप्यादरविषयत्वाभावावगमाद्यथाश्रुतमेवसाधु अनयोरिति अनवद्यानिनिर्दुष्टान्यंगा
नियस्यास्तथाभूतेइतिसंवोधनम् जृंभमाणयोर्वर्द्धमानयोरनयोस्तनयोस्तववाहुलतयोरंतरेमध्येपर्याप्तः अवकाशोनास्तीत्यन्वयः अत्रवाहुलतयोरंतरेस्तनपर्या
प्तावकाशासंवंधेपितदसंवंधउक्तः अक्रमेतिक्रमःपौर्वापर्यंतदभावोऽक्रमस्तद्रूपस्यातिशयस्योक्तिरित्यर्थः सहत्वेसमकालत्वे आलिंगतिसमंयुगपत् ज्यांमौर्वींधन्वो
॥

मुंचतीति हंमीरसंज्ञकस्यवीरस्यखड्गे कोशंपिधानंमुंचतिसति अरीणांवर्गः समूहोपिकोशंभांडारंमुंचति तथाखड्गेप्रकंपमुल्लासनंभजतिसति सः प्रकृष्टंकंपंभजतिए
वंखड्गे क्षमांक्षांतिंत्यजतिसतिसोपिक्षमांपृथ्वींत्यजतीत्यर्थः कोशोस्त्रीकुड्मलेखड्गपिधानेऽर्थौघदिव्ययोरित्यमरः अत्रधातुप्रत्ययेभंग्यायौगपद्यवर्णनंविज्ञेयं धन
गृहेति धनसंबंधिगृहेत्यर्थः चपलेति हेतोः प्रसक्तिर्ज्ञानंतज्जन्येकार्यमतीत्यर्थः यास्यामीति उदितेउक्तेप्रयेणेतिशेषः तन्व्याऊर्मिका अंगुलीयकंवलयःकं
कणमभवदित्यर्थः ऊर्मिकांतंगुलीयस्याहस्तभंगतरंगयोरितिविश्वः कार्यमुखेनेति अंगुलीयकस्यकंकणपदप्राप्तिरूपकार्यवर्णनद्वारेणेत्यर्थः आदातुमि
ति सहजसौकुमार्यंवत्याः विरहदशायांतदतिन्याय्यवर्णनमिदंहंतेतिखेदे आदातुंगृहीतुंसकृदेकवारमपिकुसुमेईक्षितेसतिअधीरदृशः हस्ताग्रमालोहितं

यथावामुंचतिमुंचतिकोशंभजतिवभजतिप्रकंपंअरिवर्गेहंमीरवीरखड्गेत्यजतिस्त्यजतिक्ष्मामाशु अत्रखड्गस्यकोशत्यागादिकालए
वरिपूणांधनगृहत्यागादिवर्णितं चपलातिशयोक्तिस्तुकार्येहेतुप्रसक्तिजे यास्यामीत्युदितेतन्व्यावलयोभवदूर्मिकाअत्रनायकप्रवा
सप्रसक्तिमात्रेणयोषितोतिकार्श्यंकार्यमुखेनदर्शितं यथावा आदातुंसकृदीक्षितेपिकुसुमेहस्ताग्रमालोहितंलाक्षारंजनवार्तयापिस
हसारक्तंतलंपादयोः अंगानामनुलेपनस्मरणमप्यत्यंतखेदावहंहंताधीरदृशःकिमन्यदलकामोदोपिभारायते यामिनयामीतिधवेवद
तिपुरस्तात्क्षणेनतन्वंग्याः

भवतीतिशेषः अपिनाकिमुगृहीतेइतिगम्यते लाक्षयापातरंजनंतद्वार्तयापिसहसाअकस्मात्पादयोस्तलंरक्तंभवतिकिमुरंजनेने
ति पूर्ववत् एवमंगानांचंदनादिनायदनुलेपनंतत्स्मरणमपिअत्यंतखेदकरंकिमुतानुलेपनं किमन्यतवाच्यमितिशेषः अलकानामगरुधूपाद्यामोदोपिभारा
यतेभारइवाचरतीत्यर्थः कार्तेरिक्यङ् अत्रादानादिरूपहेतुप्रसक्तिमात्रेणहस्ताग्रलौहित्यादिरूपकार्योत्पत्तेः साक्षादेववर्णनंनतुकार्यमुखेनेतिपूर्वस्माद्भेदः
हेतुकार्ययोरिवहेतुप्रसक्तिकार्ययोरपिसमकालत्वंसंभवतीतिसूचयितुंउदाहरणांतरमाह यामीति धवेदयितेयामिनयामीतिवदतिसतितत्क्षणेनतत्कालमे
वतन्वंग्याः पुरावलयानिअग्रिमकंकणानिपुरःप्रथमंगलितानिअपराण्यपितथैवतत्कालमेवदलितानिभग्नानीत्यन्वयः पुरोग्रेप्रथमेचस्यादितिविश्वः ॥

कु. टी.
वं.
२३

अत्र वदति गलितानीति शतृप्रत्ययेन समकालतावगतिः अर्पयंतेति अत्र हेतुकार्ययोरित्यनुवर्तते तत्पौर्वापर्यंतिक्रां चेत्स्यात्ः साधुरेव व्यतिक्रमोऽत्र वै १९ सं अग्रे प्रथमा अनुनीता समाहिता कवींद्राणामिति कविश्रेष्ठानामंगणं सर्वधिन्यो भूमयः प्रथमतरमेव प्रथममेव वलतां चपलानां भृंगाणां भ्रमराणामासंगेनाकुलानां कारिणां मदजलस्यामोदेन परिमलेन मधुरा रमणीया आसन् अभवत् पश्चादनंतरं तेषां कवीनामुपरि रुद्रसंज्ञकस्य नृपते अमी दृश्यमानाः कटाक्षाः पतिताः कीदृशाः क्षीरमुदकं यस्य तथाभूतस्य क्षीरार्णवस्य प्रसरंतीनामुरुवीचीनां दृहत्तरंगाणां सहचरास्तत्सदृशा इत्यर्थः उदकस्योदः संज्ञायामित्युदादेशः अत्र यथोक्तकटाक्षरूपकार्यमुखेन नृपतिप्रसादरूपहेतुकथनं पूर्वस्माद्विशेषः एताः अव्यवहितोक्ताः अथोक्तेषु प्रभेदेषु अनुगतप्रवृत्तिनिमित्ताभावात् कथमतिशयोक्तिपदप्रयोग इति चेत् अत्राहुः तावत्प्रभेदान्यतमत्वमेव सर्वानुगतमतिशयोक्तिपदप्रवृत्तिनिमित्तं तदेव च सामान्यलक्षणमिति न त्वाख्यस्तु निगीर्याध्यवसानमेवातिशयोक्तिः प्रभेदांतरे त्वनुगतरूपाभावादलंकारांतरनैव न चान्यत्वादिप्रभेदेषु अन्यत्वादिभिरभेदादीनां निगरणं संभवतीति वाच्यं अन्यत्वादिभिर्भिन्नवस्तुप्रतीतेरेव च म

गलितानि पुरो वलयान्यपराणि तथैव दलितानि अत्यंतातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे अग्रे मानो गतः पश्चादनुनीता प्रियेण सा॥

यथा वा कवींद्राणामासन्प्रथमतरमेवांगणभुवश्चलद्भृंगासंगाकुलकरिमदामोदमधुराः अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः॥

त्कारित्वेनानुभवसिद्धतयान्यत्वादिभिरभेदप्रतीत्यंगीकारेऽनुभवासंगतेः अन्यतमत्वं तु नालंकारविभाजकोपाधितां भजते चमत्काराप्रयोजकत्वादितिवदंति वस्तुतस्तु रूपकभिन्नत्वे सति चमत्कृतिजनकाहार्यारोपनिश्चयत्वमेवातिशयोक्तिसामान्यलक्षणं रूपकवारणाय सत्यंतं भ्रांतिवारणायाहार्येति उत्प्रेक्षानिरासाय निश्चयेति रूपकातिशयोक्तावभेदस्य द्वितीयप्रभेदेऽन्यत्वस्य तृतीये संबंधस्य चतुर्थे असंबंधस्य पंचमे सहत्वस्य षष्ठे हेतुप्रसक्तिजन्यत्वस्य सप्तमे पूर्वापरत्वयोश्च तथाविधारोपविषयत्वसत्त्वात्सर्वत्र लक्षणसमन्वयः न चैवंविधारोपस्य रूपकस्वभावोक्तिभिन्नेषु प्रायशः सर्वालंकारेषु सत्त्वादतिप्रसंग इति वाच्यं इष्टापत्तेः अलंकारांतराणां चमत्कारे प्रधानतया तदंगत्वेनावस्थिताया अतिशयोक्तेरप्राधान्येन व्यपदेशानर्हत्वात् प्राधान्येन व्यपदेशा भवंतीति न्यायात् अलंकारांतराणामेव प्रधानत्वेन व्यपदेशार्हत्वात् अत एव काव्यप्रकाशकृता विशेषालंकारप्रसंगेऽभिहितं सर्वत्रैवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते तां विना प्राये

अतएवोक्तं सैषासर्वत्रवक्रोक्तिरनयार्थो विभाव्यते यत्नो ऽस्यांकविभिः कार्यः कोलंकारोनयाविनेति दंडिनाप्युक्तं अलंकारांतराणामप्येकमाहुः परायणं वागीशमहितामुक्तिमिमामतिशयाह्वयामिति इतिश्रीमत्तत्सदुपारव्यवैद्यनाथकृतायामलंकारचंद्रिकायांश्रीमद्रंगराजाध्वरींद्रसूनुश्रीमदप्पदीक्षितकृतकुवलयानंदटीकायामतिशयोक्तिप्रकरणंसंपूर्णम् तुल्ययोगितालक्षयति वर्ण्यानामिति वर्ण्यत्वेनप्रस्तुतानामित्यर्थः इतरेषां अप्रस्तुतानां एतद्वाभयमपि सावधारणं वर्ण्यानामेवइतरेषामेववेत्यर्थः बहुवचनमनेकार्थकं द्वयोर्धर्मैक्यस्यापि संग्राह्यत्वात् धर्मैक्यं धर्मस्यऐक्यं एकत्वं एकोधर्मइतियावत् सचचमत्कारकारीबोध्यः एवंचानेकप्रस्तुतमात्रसंबंध्येकचमत्कारिधर्मानेकाप्रस्तुतमात्रसंबंध्येकधर्मान्यतरत्वंलक्षणंबोध्यं मुखंविकसितस्मितमित्यादावतिप्रसंगवारणायानेकेति अत्रचमुखप्रेक्षितादिरूपानेकवर्ण्यसंबंधोनैकोधर्मइति तन्निरासः दीपकवारणायमात्रेति प्रस्तुताप्रस्तुतप्रभेदसाधारण्यायान्यतरत्वनिवेशः त्वदंगेति प्रियांप्रतिदयितोक्तिः तवांगस्यमार्दवेसौकुमार्ये दृष्टे सतिकस्यचित्तेमालत्यादीनांकठोरतानभासते अपितुसर्वस्यैवेत्यर्थः शशांविभर्तीतिशशभृच्चंद्रस्तस्यलेखाकला गुणक्रियारूपेति एवंचतथाविधधर्मस्यप्रयोगोगुणक्रियारूपत्वभित्यभिप्रेतोक्तं नतुलक्षणेतेनरूपेणधर्मस्यनिवेशः गौरवात्प्रयोजनाभावाच्च यत्तुकैश्चिदेतद्ग्रंथदूषणलालसैर्धर्मस्यगुणक्रियारूपत्वेनलक्षणेनिवेशइत्यध्याहारोप्याभिहितंतदेतदापाततः शासतित्वयिहेराजन्नखंडावनिमंडलं नमनागपिनिश्चिंतेमंडलेशत्रुमित्रयोरित्यत्राभावरूपधर्मस्यैवान्वयादिति ॥

कटाक्षाः क्षीरोदप्रसरदुरवीचीसहचराः एतास्तिस्रोप्यतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः वर्ण्यानामितरेषांवाधर्मैक्यंतुल्ययो
गिता संकुचंतिसरोजानिस्वैरिणीवदनानिच त्वदंगमार्दवेदृष्टेकस्यचित्तेनभासते मालतीशशभृल्लेखाकदलीनांकठोरता प्र
स्तुतानामप्रस्तुतानांवागुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता संकुचंतीति प्रस्तुततुल्ययोगितायाउदाहरणं तत्रप्रस्तुतचंद्रो
दयकार्यतयावर्णनीयानांसरोजानांप्रकाशभीरुस्वैरिणीवदनानांवसंकोचरूपैकक्रियान्वयोदर्शितः उत्तरश्लोकेनायिकासौकुमा
र्यवर्णनेप्रस्तुतेऽप्रस्तुतानांमालत्यादीनांकठोरता

तथाचबहोर्भूयसः कालादनंतरंदृष्टमिदंवनमपरंमन्ये परंतुशैलानांपर्वतानांनिवेशः विन्यासविशेषः तदेवेदंवनमितिबुद्धिंप्रत्यभिज्ञारूपांदृढयतिदृढीकरो
तीत्यर्थः तत्सारूप्यादिति वनसादृश्यादित्यर्थः ग्रामादौकिंवनसादृश्यमित्साकांक्षायांतद्गर्भंविशेषणमाह कुटं विधित्यादिकुटं विघुकुटुंविगतोयोधनसमृद्ध्यसमृ
द्ध्योर्विपर्यासंस्तंप्राप्तेत्यर्थः तत्समाश्रयस्य तादृशकुटुंबिसमाश्रयस्य तथाचसमृद्ध्यसमृद्धिविपर्यासस्सर्वदाश्रयत्वंसादृश्यमितिभावः किमस्यसादृश्यस्योपस्थापकमि
तिचेत् घनविरलेतिविपर्यासमितिचताभ्यामुक्तसादृश्यगर्भीकरणात् एतेनेयंसादृश्यगर्भविशेषणोत्थापितसादृश्यमूलासमासोक्तिरितिमूलग्रंथानवलो
धस्तद्विरोधश्चेतिदूषणमलग्नकंवेदितव्यं अथात्राप्रस्तुतवृत्तांतस्यविशेषणसाम्यगम्यत्वाभावादुक्तलक्षणस्याव्याप्तिरितिचेन्न विशेषणसाम्यगम्यसादृ

कविसंरंभगोचरत्वायोगात् ततश्चसमासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः नतुरूपकइवप्रस्तुतेऽप्रस्तुतरूपसमारोपो
स्ति मुखंचंद्रइत्यत्रमुखेचंद्रत्वारोपहेतुचंद्रपदसमभिव्याहारवत्रत्रत्यश्चुंबतिचंद्रमाइत्यादिसमासोक्त्युदाहरणेचंद्रादौजारत्वाद्या
रोपहेतोस्तद्वाचकपदसमभिव्यवहारस्याभावात् निरीक्ष्यविद्युन्नयनैः पयोदोमुखंनिशायामभिसारिकायाः धारानिपातैः स
हकिंनुवांतश्चंद्रोयमित्यार्तततरंररासेदृत्येकदेशविवर्तिरूपकोदाहरणइवप्रस्तुतेऽप्रस्तुतरूपसमारोपगमकस्याप्यभावात् ॥

रूपगम्यत्वेपिविशेषणसाम्यगम्यत्वानपायात् प्राधान्यात्तुपरंसारूप्यस्यगमकत्वोपदर्शनंसारूप्यादितिग्रंथेन एवमग्रेपिविशेषणसाम्यात्सादृश्याद्धेति
विकल्पोक्तिरपिप्राधान्याभिप्रायैवेतिनिरवद्यं एवमलंकारंनिरूप्यतद्बोधप्रकारमुपदर्शयितुंभूमिकामारचयति अत्रचेति अत्रएषुउदाहरणेषु अप्र
स्तुतवृत्तांतस्येति अप्रकृतजारादिसंबंधिनश्चुंबनादिव्यवहारस्येत्यर्थः विशेष्यंत्वं द्वारोसर्वथा आरोपानारोपान्यतरविधया प्रस्तुतानन्वयिनः प्रकृ
तोऽन्वयशून्यस्य यद्वासर्वथैवेत्यस्यकवीत्यादिनान्वयः कविसंरंभेति स्वप्रतीत्युद्देश्यकशब्दसंदर्भरूपकविव्यापारेत्यर्थः ० अप्रस्तुतवृत्तांतस्यचुं
बनादेरिवाप्रस्तुतस्यजारादेरप्यिंद्रादौसमारोपइतिमतंनिराकरोतिनत्विति अप्रस्तुतरूपेति अप्रस्तुतस्वरूपेत्यर्थः कुतस्तः न्ताहमुखमित्यादि ॥

कु॰ टी॰ ताद्यात्म्येन चंद्रारोपे तादात्म्यस्यापि संसर्ग॰ । यथा आरोपविषयत्वान्नस्य चंद्रत्वा॰ नतिरिक्तास्य चंद्रत्वारोपेत्युक्तिः नत्वप्रकारतया चंद्रत्वारोप उक्त इति भ्रमितव्यं चंद्र

चं॰ इति शब्देन चंद्रविशेष्यणत्वेनोपस्थितस्य चंद्रत्वस्य मुखे विशेषणतया ऽरोपासंभवात् एवं जारत्वेत्यत्रापि बोध्यं तद्वाचकेति जारवाचकेत्यर्थः ननु जार

३१ दिपदसमभिव्याहाराभावात् श्रौतारोपासंभवेप्यार्थो जारत्वारोपोस्तु नहि तत्रापि तादृशसमभिव्याहारो हेतुः रूपकध्वनेरुच्छेदापत्तेरित्याशंक्याह

निरीक्ष्यति पयोदो मेघो विद्युत्त्वरूपेण नयनेन निशायामभिसारिकायाः मुखं वीक्ष्य धारानिपातैः सहर्षातः किं त्वयं चंद्र इति मत्वा स्वार्ततरं यथा स्यात्तथा रसे आक्रंदनं रुतवानित्यर्थः उदाहरणद्वये त्विति अतिरेकदृष्टांतः अत्रयथा गमक मस्ति तादृशस्य समासोक्त्युदाहरणे अभावादित्यर्थः तथा चार्थारोपोप्य

तत्र हि विद्युन्नयनेनेत्यत्र निरीक्षणानुगुण्यादुत्तरपदार्थप्रधानरूपमयूरव्यंसकादिसमासव्यवस्थितावुत्तरपदार्थभूतनयनान्व

यानुरोधात् पयोदेऽनुक्तमपि द्रष्टृपुरुषत्वरूपं गम्यमुपगम्यते न चेह तथा निरीक्षणवत् त्वय्यागते किमिति वेपतर एष सिंधुरि

तिश्लोके सेतुकृत्त्वादिवत्त्वाप्रस्तुतासाधारणवृत्तांत उपात्तोस्ति नापि श्लिष्टसाधारणादिविशेषणसमर्पितयोः प्रस्तुताप्रस्तुतवृत्तां

तयोरप्रस्तुतवृत्तांतविद्युन्नयनवत्प्राधान्यमस्ति येन तदनुरोधात्त्वं सेतुमंथकृदित्यत्रेव प्रस्तुतेनुक्तमप्यप्रस्तुतरूपसमारोपमभ्यु मूलम्

नाशंक्य इति भावः ननु विद्युन्नयनेनेत्यत्र किमप्रस्तुतारोपगमकं यदभावात्समासोक्तौ तदभाव इत्यतो गमकं दर्शयितुमाह तत्रेति आनुगुण्यात् आनुकूल्यात्

उपमितसमासस्य पूर्वपदार्थप्रधानतया नयनसदृशविद्युत्करणकत्वस्य निरीक्षणेऽसंभवात् प्रतिकूलत्वमिति भावः अनुक्तमपि अश्रौतमपि रूपणं आ

रोपः न चेहेति इह समासोक्त्युदाहरणे तथा निरीक्षणवत् नयनकरणकनिरीक्षणवत् सेतुकृत्त्वादीत्यादिना मथनकारित्वपरिग्रहः नन्विहापि परनायिका

मुखचुंबनरूपस्याप्रस्तुतवृत्तांतस्याप्रस्तुतासाधारणधर्मत्वादप्रस्तुतारोपगमकत्वं स्यादित्याशंकां परिहरति नापीति साधारणादीत्यादिना सादृश्यगर्भविशे टीका

षणसंग्रहः वृत्तांतयोरिति निर्धारणषष्ठी वृत्तांतयोर्मध्ये इत्यर्थः विद्युन्नयनवदिति प्रस्तुताप्रस्तुतयोर्विद्युन्नयनयोर्मध्ये प्रधानयनस्य उत्तरपदार्थप्रधानसमा

प्राधान्यं तथा नास्तीत्यर्थः सेतुमंथकृदिति पाठः सेतुबंधकृदिति त्वपपाठः कथंचिदर्थतोऽनुवादत्वेन व्याख्येयः उपसंहरति तस्मादिति मात्रपदेनाप्रस्तुतारोपव्य
वच्छेदः विद्युन्नयनवत्समासकृतस्योत प्राधान्याभावेऽपि विशेषणसामर्थ्यावगतस्याप्रस्तुतवृत्तांतस्यार्थतः प्राधान्यमस्तीति शंकते यद्यपीति नन्वप्रस्तुतवृत्तां
ताभिन्नत्वेनावगतस्य प्रस्तुतवृत्तांतस्य प्रस्तुतविशेष्येणान्वयात्कथमप्रस्तुतवृत्तांतस्य प्राधान्यमिति शंकानिरासायाह विशेष्येणैवेति ननु तद्विशेषणीभू
तप्रस्तुतवृत्तांतेनेत्येवकारार्थः समाधत्ते तथापीति अयमाशयः नात्र श्लिष्टादिविशेषणैः समर्पितः परनायिकामुखचुंबनादिरूपोऽप्रस्तुतवृत्तांतः प्रागिव कं

तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुताहेतुः यद्यपि प्रस्तुताप्रस्तुतवृत्तांतयोरिह श्लिष्टसाधारणविशेष
णसमर्पितयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वयादस्ति समप्राधान्यं तथाप्यप्रस्तुतवृत्तांतान्वयानुरोधान्न
प्रस्तुतेऽप्रस्तुतरूपसमारोपोंगीकार्यः तथाहि यथा प्रस्तुतविशेष्ये प्रस्तुतवृत्तांतस्यान्वययोग्यता तथैवाप्रस्तुतेऽपि जारादौ नास्ति
प्रस्तुतवृत्तांतस्यान्वययोग्यता एवं च समप्रधानयोः प्रस्तुताप्रस्तुतवृत्तांतयोरन्यतरस्यावश्यमारोपेऽभ्युपगंतव्ये श्रुत एव प्रस्तुतेऽप्रस्तु
तस्यारोपश्चारुताहेतुरिति युक्तं नन्वेवं सति विशेषणसाम्यादप्रस्तुतस्य गम्यत्वं समासोक्तिः विशेषणानां साम्येन यत्र प्रस्तुतवर्ति
नोऽप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यत इत्यादीनि प्राचीनानां समासोक्तिलक्षणानि न संगच्छेरन् प्रस्तुते श्लिष्टसाधारणा
दिविशेषणसमर्पितानुरागपूर्वकवदनचुंबनाद्यप्रस्तुतवृत्तांतसमारोपमात्रस्य चारुताहेतुत्वाभ्युपगमेन विशेषणसाम्यकृतका
ऽऽमुकाद्यप्रस्तुतधर्मीव्यंजनानपेक्षणादिति चेत् ॥

यापि मुखस्याप्रस्तुतगतत्वेन भासमानतया हृत्वादप्रस्तुतजाराद्यारोपावगतिः स्यात् स्वापेतु तादृ
स्येनावगते तस्मिन्नप्रस्तुतासंबद्धस्य कविसंरंभगोचरत्वायोगात्प्रस्तुतसमारोपितत्वेन पर्यवसानमिति नन्वेवं तर्हि प्रस्तुतवृत्तांतस्याप्यप्रस्तुतवृत्तांतनाश्र
येषु धर्मिरायन्वयोस्तु असंबद्धाभिधानप्रसंगपरिहारस्य तुल्यत्वादित्याशंक्याह तथाहीत्यादि एवं च योग्यतारूपविनिगमकविरहे च मास्तु तर्हि कस्याप्य

उ.टी.
चं.
३८

अन्यथा। संबद्धाभिधाने प्रसंगापत्तेरिति भावः किं तर्हि विनिगमकं तत्राह श्रुत एवेति तथाच श्रुतप्रस्तुतार्थोपस्कारकतया चमत्कारहेतुत्वमेव विनिगमकमिति भावः अप्रस्तुतस्य अप्रस्तुतवृत्तांतस्यनन्वेवमिति एवमप्रस्तुतसमारोपानंगीकारे विशेषणानामित्यादि विघालाद्योक्तलक्षणं प्रस्तुतवर्तिनां विशेषणानां साम्येनेत्यन्वयः प्रस्तुते समारोपार्थं अप्रस्तुतधर्मिव्यंजनानपेक्षायामपि समारोप्यमाणवृत्तांतविशेषणत्वार्थं तदपेक्षणात्तल्लक्षणासंगतिरित्याह स्वरूपतइत्यादि स्वरूपतः अप्रस्तुतसंबंधित्वेनाज्ञायमानस्य नन्वपेक्षासत्वेपि विशेषणसाम्यस्य तद्व्यंजनासामर्थ्याल्लक्षणासंगतिरतादवस्थ्यमित्याशंक्य साक्षादसामर्थ्येपि वृत्तांताभिव्यक्तिद्वारा तत्संभावान्न दोष इत्याह न चेत्यादि तदीयत्वानुसंधानं कामुकसंबंधित्वानुसंधानं तत्र मुखचुंबनादौ अनुसंधानं तद्वदिति पाठः

उच्यते स्वरूपतः प्रस्तुतवृत्तांतस्यारोपेन चारुताहेतुः किंत्वप्रस्तुतकामुकादिसंबंधित्वेनावगम्यमानस्य तस्यारोपः तथाभूतस्यैव रसानुगुणत्वात् न च तावदवगमने विशेषणपदानां सामर्थ्यमस्ति अनः श्लेषादिमहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन वदनचुंबनादिना तत्संबंधिनि कामुकादावभिव्यक्ते पुनस्तदीयत्वानुसंधानं तत्र भवति यथा स्वरूपतो दृष्टेन राजाभ्वादिना तत्संबंधिनि राजादौ स्मारिते पुनरश्वादौ तदीयत्वानुसंधानमिति विशेषणसाम्येन वाच्योपस्कारकस्याप्रस्तुतव्यंजनस्यास्त्यपेक्षा अतएव श्लिष्टविशेषणाभ्यामिव साधारणविशेषणाभ्यामप्यप्रस्तुतव्यवहारसमारोप इत्येवं प्राचीनानां प्रवादः कंदुके व्यावल्गत्कुचभारत्वादि विशिष्टवनितासेव्यत्वस्य कामुकसंबंधित्वेनैव समा

अनुसंधानवदिति पाठे यथेत्यस्यासंगतेः अतएव अप्रस्तुतव्यंजनस्यापेक्षणादेवनन्वप्रस्तुतधर्मिव्यंजनानपेक्षणे ईदृशः प्रवादः कुतो न युक्तस्तत्राह कंदुक इति विशिष्टेत्यस्य सेव्यत्वेनान्वयः संबंधित्वेनैवेत्येवकारोक्तमेवार्थं सोपपत्तिकमाह स्वरूपतइति अप्रस्तुतकामुकसंबंधित्वानालिंगितरूपेणेत्यर्थः तथाचारोपासंभवात्तादृशप्रवादानुपपत्तिरिति भावः श्लिष्टविशेषणाभ्यामयमेंद्रीत्यादौ मुखचुंबनादेः स्वरूपतोप्यारोपस्यैव सत्वात्साधारणविशेषणाभ्यामुपष्टंभकत्वेन प्रवादोपन्यासः ननु तत्रापि तादृशवनितासेव्यत्वस्य तादृशवनिताकृतविपरी

प्रस्तुतवृत्तांतरूपस्य रूपतोऽप्यारोपस्यैव संभवान्नतादृशप्रवादानुपपत्तिरत आह किंचेति युक्तमिति तत्सामान्यादितरेषु तथात्वमिति न्यायादिति भावः ल
क्षणमिति ज्ञातानेन वचनं तदेव मुक्तरीत्याऽयमिंद्रीमुखं पश्य रक्तश्चुंबति चंद्रमा इत्यत्र शक्तिव्यंजनाभ्यां प्राचीप्रारंभसंबंधाश्रयश्चंद्रो जारसंबंधिसानुरागपर
नायिकामुखचुंबनाश्रय इति बोधः अप्रस्तुतवृत्तांताभिन्नत्वेनाध्यवसितस्य प्रस्तुतवृत्तांतस्य तादात्म्येनाप्रस्तुतारोपविषये प्रस्तुतधर्मिण्यन्वय इति मत
नुसानुरागपरनायिकामुखचुंबनाभिन्नप्राचीप्रारंभसंयोगाश्रयो जाराभिन्नश्चंद्र इति बोधः एवमुदाहरणांतरेप्यनेनैव प्रकारेण बोधप्रकार ऊहनीयः
इत्यलंकाररत्नटीकायां समासोक्तिप्रकरणं गुणीभूतव्यंग्यप्रभेदभूतसमासोक्त्यलंकारप्रसंगात्तद्भेदं परिकरालंकारं लक्षयति अलंकार इति अलं

स्वरूपतः कंदुकेर्पितस्य सत्वेनासमारोपणीयत्वात् किंच सारूप्यनिबंधनत्वेनोदाहृतायां समासोक्तावप्रस्तुतवृत्तांतस्याध्या
द्धार्यस्याप्रस्तुतवृत्तांतरूपेणावगम्यतया तेन रूपेण तत्र समारोपसिद्धेः अन्यत्रापि तथैव युक्तमित्यप्येवं प्राचीनानां लक्षण
मिति विभावनीयम् अलंकारः परिकरः साभिप्राये विशेषणे सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः अत्र सुधांशुकलितो
त्तंस इति विशेषणं तापहरणसामर्थ्याभिप्रायगर्भं यथा वा तव प्रसादात्कुसुमायुधोपि सहायमेकं मधुमेव लब्ध्वा कुर्यां ह
रस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोन्ये अत्र पिनाकपाणेरिति हरविशेषणं कुसुमायुध इत्यर्थलभ्याहमर्थविशेष
णं च सामर्थ्याभिप्रायगर्भं यथा वा

कारत्वोत्कीर्तनं च दोषाभावेनैव गतार्थत्वमिति शंकानिरासाय तत्स्वरूपवचनं चाग्रे करिष्यते साभिप्राये
प्रकृतार्थोपपादकार्थविषयकाभिप्रायपूर्वके तथाभूतार्थव्यंजक इति यावत् इत्थं च प्रकृतार्थोपपादकार्थव्यंजकविशेषणत्वं लक्षणं बोध्यं ध्वनावतिव्या
प्तिवारणाय प्रकृतार्थोपपादक इति हेत्वलंकारवारणाय बोधकत्वं विहाय व्यंजकत्वनिवेशः वक्ष्यमाणपरिकरांकुरालंकारवारणाय विशेषणेति तत्र तु वि
ष्यत्वेनेति नातिप्रसंगः सुधांश्विति सुधांशुना कलितः कृत उत्तंसः शेखरो येन स इति हरविशेषणं उत्तंसः कर्णपूरेस्यात् शेखरे चावतंसवदिति विश्वः ॥

क॰ टी॰ सामर्थ्याभिप्रायं सामर्थ्यव्यंजकं तत्वेति इंद्रं प्रतिकामस्योक्तिः तव प्रसादात्कुसुमायुधोप्यहं न तु वसंतमेवैकं मुख्यं सहायत्वं व्यापिना कोधनुर्विशेषः पाणौ
चं॰ यस्य ताहशस्यापि हरस्य धैर्यच्युतिं धैर्यस्खलनं कुर्यां अन्ये धन्विनो धनुर्धरा मम पुरः के अगणनीया इत्यर्थः कुसुमायुध इति विशेषणं चेत्यन्वयः अर्थल
२१ भ्येति कुर्यामित्युत्तमपुरुषाक्षिप्तेत्यर्थः अभिप्रायगर्भं अभिप्रायपूर्वकं अत एवान्वयवार्थमात्रविश्रांतत्वाद्द्वारपदेन न पौनरुक्त्यमपि सर्वेति सर्वेषाम
शुचीनां रक्तपूर्वरेतो विण्मूत्रादीनां निधानस्य स्थानभूतस्य कृतघ्नस्य उत्तमान्नपानादिकृतोपकारनाशकस्य शरीरकस्येति निंदायां कप्रत्ययः कृतेत

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः शरीरकस्यापि कृते मूढाः पापानि कुर्वते अत्र शरीरविशेषणानि तस्य हेयत्वेनासं
रक्षणीयत्वाभिप्रायगर्भाणि व्याख्यनकतयास्थितं श्रुतिगणं जन्मीनवल्मीकतो नाभो नाभवमच्युतस्य सुमहद्गाण्यचनाभाषि
षं चित्रार्थोनरहत्कयामचकथं मुत्राम्यिनासं गुरुदेवत्वद्गुणं दंदवर्णनमहकर्तुकथं शक्नुयां अत्र श्रुतिगणं व्यास्थमित्या
दीनि विशेषणानि स्वस्मिन्व्यासाद्य साधारणकार्यकर्तृत्वनिषेधमुखेन नाहं व्यासइत्याद्यभिप्रायगर्भाणि तत्राद्ययोरुदाहरण
योरेकैकं विशेषणम् समनंतरयोः प्रत्येकं बहूनि विशेषणानि तत्रापि प्रथमोदाहरणे सर्वाणि विशेषणान्येकाभिप्रायगर्भाणि प
दार्थरूपाणि च द्वितीयोदाहरणे भिन्नाभिप्रायगर्भाणि वाक्यार्थरूपाणि चेति भेदः एतेषु व्यंग्यार्थसद्भावेपि न ध्वनिव्यपदेशः शि
वस्य तापहरणे मन्मथस्यैकैमुक्तिकन्यायेन सर्वधन्विधैर्यभंजकत्वे शरीरसंरक्षणार्थं पापमाचरतां मूढत्वे स्वस्य वर्णनीयराजगुणक
थनाशक्तत्वे च वाच्यस्यैवोपस्कारकत्वात् ॥ ६ ॥
दर्थं तत्संरक्षणार्थमिति यावत् विशेषणानि पूर्वार्धोक्तानि तस्य शरीरस्य व्या
स्थमिति राजानं प्रति कवेरुक्तिः हे देव राजन् त्वद्गुणानां दंदस्य समूहस्य वर्णनं कर्तुमहं कथं शक्नुयां शक्तो भवेयमित्यन्वयः कुतस्तत्राह यतोहं एकरूपतया
स्थितं वेदसमूहं न व्यास्थं अनेकशाखारूपेण न विस्तारितवान् तथा वतत्कर्ता व्यासो न भवामीति व्यज्यते एवमग्रेपि वल्मीकतो वल्मीकात् जन्मास्यास्तीति ज
मीनभवामीति शेषः न यावच्च नाहं वाल्मीकिरिति

अच्युतस्य नाभौ नाऽभवं नोत्पन्न इत्यनेन नाहं चतुर्मुख इति सुमहद्भाष्यं महाभाष्यं चूर्णाभाषिषं न भाषितवानित्यनेन नाहं सहस्रजिह्वः शेष इति चित्रो विचि
त्र अर्थो यस्यास्तां बृहत्कथां न अवकथं न कथितवानित्यनेन नाहं तद्वक्ता शिवो गुणाढ्यो वेति सुत्रामणि इन्द्रे गुरुरूपदेष्टा कोऽनासमित्यनेन नाहं वा क्यतिरितिव
त्र अपि उच्यते उक्तेष्वप्युदाहरणेषु वै लक्षण्यं दर्शयति तत्रेत्यादिना एकैकं एकस्य विशेष्यस्य एकमेव समनन्तरयोः अनन्तरोक्तयोः प्रत्येकं एकं विशेष्यं प्रति तत्रापि
तयोर्मध्येऽपि एकाभिप्रायगर्भाणि एकार्थाभिप्रायपूर्वकाणि वाक्यार्थेति नमाऽस्थमित्यादिनिषेधवाक्यार्थषट्कस्योक्तरीत्याहेतुत्वेनान्तिमवाक्यार्थे विशे
षणत्वादिति भावः तेषु उक्तोदाहरणेषु ध्वनिव्यपदेशः ध्वनिव्यवहारः तत्र हेतुमाह तापहरणे इत्यादिना तापहरणे इत्यादिसप्तम्यन्तचतुष्टयस्य वाच्य

अत एव व्यङ्ग्यस्य वाच्यपरिकरत्वात्परिकर इति नामास्यालंकारस्य केचित्तु निष्प्रयोजनविशेषणोपादाने अपुष्टार्थत्वदोषस्योक्तत्वा
त्सप्रयोजनत्वं विशेषणस्य दोषाभावमात्रं न कश्चिदलंकारः एकनिष्ठतादृशानेकविशेषणोपन्यासे परं वैचित्र्यविशेषात् परिकर
इति अलंकारमध्ये परिगणित इत्याहुः वस्तुतस्त्वनेकविशेषणोपन्यास एव परिकर इति न नियमः श्लेषयमकादिष्वपुष्टार्थदोषा
भावेन तत्रैकस्यापि विशेषणस्य साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात्परिकरोपपत्तेः इत्यनेन सामानाधिकरण्येनान्वयः उप

स्कारकत्वादिति तथा चापराङ्गरूपगुणीभूतव्यङ्ग्यभेदत्वान्न ध्वनिव्यवहार इति भावः नन्वेवमपि यथाश्रुतलक्षणस्य निःशेषच्युतेत्यादिध्वनावतिव्याप्तिरि
त्यत आह अत एवेति वाच्योपस्कारकत्वादेवेत्यर्थः परिकरत्वात् अङ्गत्वात् तथा च परिकरपदमहिम्ना प्रकृतार्थोपपादकत्वस्य व्यङ्ग्यविशेषणस्य लाभान्ना
तिव्याप्तिरिति भावः अपुष्टार्थेति भावप्रधानं उक्तत्वादिति अर्थोऽपुष्टः कष्टो व्याहतः पुनरुक्तदुःक्रमग्राम्या इत्यनाऽलंकारिकैरुक्तत्वादित्यर्थः कथं तर्हि तैरेवा
स्यालंकारत्वेन कथनमत आह एकनिष्ठेति तादृशेति साभिप्रायेत्यर्थः दोषाभावेनैति अपुष्टार्थत्वस्य दोषताभावेनेत्यर्थः उद्भटालंकारसंपत्त्यासहृदयवैमुख्य
रूपदूषकताबीजाभावादिति भावः विच्छित्तिश्चमत्कृतिः परिकरत्वोपपत्तेः परिकरस्यालंकारत्वोपपत्तेः तत्र दोषस्याप्रसक्त्या विच्छित्तिविशेषस्य तदभावप्रयुक्तत्वासम्भवा

त्तत्प्रयोजकमलंकारत्वमावश्यकमिति भावः

का॰ टी॰
चं॰
३८

थमलस्थले उदाहरति यथेति निजांदेवतामतिक्रम्य यदि यजेत अर्थाद्देवतांतरं पूजयेत तदा उभयतः लोकद्वयात् च्यवते भ्रश्यति अपं पापमपि जुषते सेवते प्राप्नोतीतियावत् कानिजादेवतातत्राह वयंवनवताप्रशस्तवनयुक्तेन क्षितिभृतागोवर्द्धनगिरिणेव सदेवतकाः दैवतसहिताः स एवास्माकं दैवतमित्यर्थः अननता अरक्षकेण अहिद्रुहा इंद्रेण किं प्रयोजनमितिशेषः अहिर्वृत्रासुरः ॥ अहिर्वृत्रासुरे सर्पइतिविश्वः नन्वेवंसति तत्रैवालंकारतास्यान्नतुसुधांशुकलितोतसइत्यादावतआह एवमिति विच्छित्तिविशेषेनिदोषाभावप्रयुक्तविच्छित्तिव्यावर्त्तेत्यर्थः ननुयमकदावपितादृशाविच्छित्तिविशेषेमानाभावःविच्छित्तिसामान्यंतुप

यथा अतियजेतनिजांयदिदेवतामुभयतश्च्यवनेजुषतेप्यघं क्षितिभृतैवसदैवतकावयंवनवतानवताकिमहिद्रुहा अत्रहि पुरुहूतपूजोद्युक्तान्नंदादीन्प्रतिभगवतः कृष्णस्यवाक्येगोवर्धनगिरिरेवचास्माकंरक्षकत्वेनदेवतमितिसएवपूजनीयः नत्वरक्षकः पुरुहूतइत्येवंपरेवनवतेतिगोवर्द्धनगिरेर्विशेषणकाननवत्वान्निर्झरादिमत्वाच्चपुष्पमूलफलतृणादिभिरारण्यकानामस्माकमस्मद्धनानांगवांचायमेवरक्षकइत्यभिप्रायगर्भं एवमत्रसाभिप्रायैकविशेषणविन्यासस्यापिच्छिवित्तिविशेषवशादस्यसाभिप्रायस्यालंकारत्वसिद्धौ अन्यत्रापिमुधांशुकलितोत्तंसइत्यादौतस्यात्मलाभोननिवार्यते अपिच एकपदार्थहेतुकंकाव्यलिंगमलंकारइतिसर्वसंमतं तद्वदेकस्यापिविशेषणस्यसाभिप्रायस्यालंकारत्वंयुक्तमेवसाभिप्रायेविशेष्येतुभवेत्स

र्युदस्तदोषाभावेनाप्युपपन्नं आपत्कालपर्युदस्तस्यमृच्छौचहीनतादोषस्याभावेनेवतदानीमपिमृच्छौचकर्तुरतिशयाधानमितिनालंकारत्वसिद्धिरित्यतआह अपिचेति भस्मोद्धूलनभद्रमस्तुभवतेरुद्राक्षमालेशुभंहासोपानपरंपरांगिरिसुताकांतालयालंकृतिः अद्याराधनतोषितेनविभुनायुष्मत्सपर्यासुखालोकोच्छेदिनिमोक्षनामनिमहामोहेनिधीयामहइत्यादौमोक्षस्यमहामोहत्वेसुखालोकोच्छेदित्वंसुखालोकोच्छेदिनीत्येकपदार्थोहेतुरितिकाव्यलिंगमलंकारत्वेनयथाभ्युपगतंनतुनिर्हेतुत्वोषाभावमात्रतयाविच्छित्तिविशेषस्यानुभवसिद्धत्वात्तथेहापीतिभावः इत्यलंकारचंद्रिकायांपरिकरप्रकरणम्

साभिप्रायइति अत्रविशेषणपदस्थानेविशेष्येतिप्रक्षिप्य पूर्ववल्लक्षणंबोध्यं तत्रपरिकरेऽतिव्याप्तिवारणार्थंलक्ष्येलक्षणंसंगमयति अत्रचेति यद्यपिदेवा
नरव्यावर्तकतयाचतुर्भुजइतिविशेषणं तथापिनृपादिसाधारणदेवपदशक्तेर्विष्णौनियमनेनविशेष्यप्रतीत्यौपयिकतयाविशेष्यपदत्वमभिमतंबोध्यं ॥
असंदिग्धमुदाहरति फणीन्द्रइति राजानंप्रतिकवेरुक्तिः तवगुणान्वक्तुंफणीन्द्रःशेषःसमर्थइत्यध्याहार्यं एवमग्रेऽपि हेहयाधिपःकार्तवीर्यः आखंडल
इंद्रः उभयत्रगुणानित्यनुषज्यते एषःमर्त्यधर्मः अहंक्वतेगुणाःक्वेतिक्वशब्दौमहदंतरंसूचयतः सहस्रमुखत्वादीत्यादिनासहस्रबाहुत्वसहस्रनयन

चतुर्णांपुरुषार्थानांदातादेवश्चतुर्भुजः अत्रचतुर्भुजइतिविशेष्यंपुरुषार्थचतुष्टयप्रदानसामर्थ्याभिप्रायगर्भं यथावा फणीन्द्रस्ते
गुणान्वक्तुंलिखितुंहैहयाधिपः द्रष्टुमाखंडलःशक्तःक्वाहमेषक्वतेगुणाः फणीन्द्रइत्यादिविशेष्यपदानिसहस्रवदनाद्यभिप्रा
यगर्भाणि नानार्थसंश्रयः श्लेषोवर्ण्यावर्ण्योभयाश्रितः सर्वदोमाधवःपायात्सयोगंगामदीधरत् अब्जेनत्वन्मुखतुल्यंहरिणा
हितशक्तिना उच्चैरद्भुरिकीलालः शुशुभेवाहिनीपतिः अनेकार्थशब्दविन्यासःश्लेषः सचत्रिविधः प्रकृतानेकविषयः अप्रकृ
तानेकविषयःप्रकृताप्रकृतानेकविषयश्च सर्वदेत्यादिक्रमेणोदाहरणानि तत्रसर्वदोमाधवइतिस्तोतव्यत्वेनप्रकृतयोर्हरिहर
योःकीर्तनेप्रकृतश्लेषः अब्जंकमलं अब्जश्चंद्रस्तयोरुपमानमात्रत्वेनाप्रकृतयोःकीर्तनमित्यप्रकृतश्लेषः वाहिनीपतिःसेनापतिः
समुद्रश्च तत्रसमितौशस्त्रप्रहारोत्पन्नरुधिरस्यसेनापतेरेव

वर्णनप्रकृतमिति प्रकृताप्रकृतःश्लेषः

त्वयोःसंग्रहः अत्रानेकेषांविशेष्यपदानांतत्तदभिप्रायगर्भत्वविशेषः इतिपरिक
रांकुरप्रकरणम् श्लेषंलक्षयति नानार्थेति नानार्थस्यशब्दस्यसंश्रयोयोजनंश्लेषइतिलक्षणं वर्ण्येत्यादिविभागः वर्ण्यंचावर्ण्यंचवर्ण्यावर्ण्योभयेचएत
त्त्रयाश्रितस्त्रिविधइत्यर्थः सर्वेति सर्वदः समाधवःपायात् यः अगंगोविघनंपर्वतंगांपृथ्वींचवराहावतारेधृतवानितिविष्णुपक्षे हरपक्षेतुसउमाधवः सर्वदापा
पात् योगंगांधृतवानित्यर्थः हरिणेनमृगेणांकरूपतया आहिताकृताशक्तिःसंगोयस्येतिचंद्रपक्षे हरिणासूर्येणेतिकमलपक्षे उच्चैरतशस्त्रपातैरुद्भूतंकीलालं

रुधिरंयस्यसवाहिनीपतिःसेनापतिः

कु॰ टी॰ चं॰ ४९

तथा वाहिनीनां नदीनां पतिः समुद्रश्चेति पक्षे कीलालं जलं सन्निहितोऽस्त्यामेत्यात इति येन करुणा धुतान्तःकरणेन द्रोहकर्त्रापि अदरो भयशून्यः काकस्त्रातो रक्षितः न तु हतः संपवित्रनामा रणेरस्यातः विमृशमेभि शरणमस्ति सत्यं कृष्णापक्षे तु काकोदरः कालियसर्पः पूतनापाराक्षस्यामारणेनरक्षातद्रूतिविशेषः नीतानामिति दयितां प्रतिनायकोक्तिः तवदृक्षणेनेत्रकमलानां पद्मानां हरिणानां च सदृशोऽस्तीत्यन्वयः कीदृशानां वने जले अरण्ये च वृद्धिं प्राप्तानां तथालब्धे लोभश्रीलेर्भूरिभिः शिलीमुखैर्भ्रमरैः रा कुलीभावं व्याप्तता नीतानामिति पद्मपक्षे हरिणपक्षे तु लब्धे भ्यो व्याधेः कर्तृभिर्भूरिशिलीमुखैर्वाणैः करणभूतैरा

यथा वा त्रातः काकोदरो येन द्रोग्धापि करुणात्मना पूतनामारणस्यातः समेस्तु शरणं प्रभुः नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः सदृशे वनवृद्धानां कमलानां त्वदीक्षणे असावुदयमारूढः कान्तिमान्रक्तमण्डलः राजा हरति लोकस्य हृदयं मृदुलैः करैः तत्राद्यस्मा त्यव्यत्वेन प्रकृतयोः रामकृष्णयोः श्लेषः द्वितीये उपमानत्वेनाप्रकृतयोः पद्महरिणयोः श्लेषः तृतीये राजा हरति लोकस्येति चन्द्रवर्णनप्रस्तावे प्रकृतस्य प्रत्यग्रोदितचन्द्रस्य अप्रकृतस्य नवाभिषिक्तस्य नृपतेः श्लेषः यद्यप्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चः तत्प्रकृताप्रकृताभिधानमूलकस्योपमादेरलंकारस्य व्यंग्यत्वाभिप्रायं न त्वप्रकृतार्थस्यैव व्यंग्यत्वाभिप्रायं अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्याभिधेयत्वावश्यंभावेन व्यक्त्यनपेक्षणात् यद्यपि प्रकृतार्थे प्रकरणबलात्स्फुरति तिवुद्धिस्थसत्येव पश्चान्नृपतितद्ग्राह्यधनादिवाचिनां राजकरादिपदानामन्योन्यसन्निधानबलात्तत्तद्विषयशक्त्यन्तरोन्मेषपूर्वकमप्रस्तु

कुलीभावं व्यपलतां नीतानामिसर्गः मृगभूभ्येदे कमलइति विश्वः असाविति उदयं शैलं अभिवृद्धिं च रक्तं रक्तवर्णं अनुरक्तं च मण्डलं बिंबं देशश्च राजा चन्द्रो नृपश्च मृदुलैरभिनवैः अल्पैश्च करैः किरणैः आह्यधनैश्च प्रत्यग्रोदितेति अभिनवोदितेत्यर्थः ननु प्रकरणेनाभिधायानियमनादप्रकृतार्थस्य व्यंग्यत्वमेवेति कथं श्लेषइत्याशंक्याह यदिति अलंकारस्येति न चैवं शब्दशक्तिमूलवस्तुध्वनेरुच्छेद इति वाच्यं शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वं यत्र प्रसीद

ध्रमात्युदारानुदारश्चेत्यत्र धनिनि विरुद्धरूपे प्रस्तुते ध्वनिशब्देनाभिधयाप्रतीयमानेपि तन्मूलकस्य विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतद्दति वस्तुध्व
नेरशनिशब्दव्यक्तिमूलस्य संभवात् अलंकारस्यैतस्योपलक्षणत्वात् अन्योन्यसन्निधानबलात् परस्परार्थं संबंध्य यथावाचकशब्दसमभिव्याहाररूपशब्दो
तरसन्निधिबलात् तया चाप्रकृतस्याभिधानियामकमस्तीति भावः एतावता पूर्वापरभावमात्रेण तस्य अप्रकृतार्थस्य गूढश्लेष इति गूढत्वं चाप्रकृतत्वेनद्वि
तीयार्थस्य पश्चात्प्रमप्रत्ययात् अयमिति माघे रैवतकगिरिवर्णनं अयं गिरिस्तटीर्विभर्तीत्यन्वयः किंभूताः अतिजरठाः अत्यंतकठिनाः प्रकामगुर्वीः अति

न चैतावता तस्य व्यंग्यत्वं शक्यमतिपाद्यमाने सर्वथैव व्यक्त्यनपेक्ष गात्यर्थेवस्थिते प्रकृतार्थाभिधाने पश्चात्स्फुरति चेत् कामं गूढश्लेषो
भवतु अस्ति वान्यत्रापि गूढश्लेषः अयमतिजरठाः प्रकामगुर्वीरलघुविलंविपयोधरोपरुद्धाः सततमसुमतामगम्यरूपाः परिण
तदिक्करिकास्तटीर्विभर्ति मंदमग्निमधुरर्यमोपलाद्दर्शितश्वयथु चाभवत्तमः दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरस
न्निधौ अत्र हि समासोक्त्युदाहरणयोः प्राकरणिकेर्थे प्रकरणवशात् झटिति बुद्धिस्थे विशेषणसाम्यादप्रकृतोपि वृद्धवेश्यावृ
त्तांतादिः प्रतीयते तत्र समासोक्तिरभंगश्लेष इति सर्वेषामभिमतमेव एवमन्यत्रापि गूढश्लेषे ध्वनिबुद्धिर्न कार्या यथा वा रम्या
इति प्राप्तवतीः पताकारागं विविक्ता इति वर्द्धयंतीः यस्यामसेवंत नमद्वलीकाः समं वधूभिर्वलभीर्युवानः अत्र द्वितीयांतविशेषण
समर्पितार्थांतराणां न शब्दसामर्थ्येन व

महत्त्वः अलघुभिर्विलंबमानैर्मेघैराप्ताः निरंतरं प्राणिनामगम्यरूपाः परिणतास्तिर्यक्दंतप्रहारिणः
दिग्गजायासुताः वृद्धवेश्यापक्षे तु जरठा जीर्णाः पयोधराः कुचाः अगम्याः संगमायोग्याः परिणते प्रकटे दिक्करिके यासां ता इत्यर्थः दिक्करितुल्यदशनस्थ
तं करिकानखक्षतं दिक्रदंष्ट्रवत्तुलाकारं करिकानखरेखिकेति यादवः मंदमिति ओषधीनां पत्युश्चंद्रस्यासंनिधौ सति अर्यमोपलाः सूर्यकांता मंदीभूतमग्निं
प्तवंतः तमः दर्शितः श्वयथुः पुष्टत्वं येन न तथा अभवत् दृष्टयस्तिमिरजं दोषं आंध्यं सिषेविरे पक्षांतरे ओषधिपतिर्वैद्यः एवं मंदाग्नित्वशोथतिमिरणि रोग

वृत्तोत्तादिरित्यादिपदाद्रोगिवैघरत्वांनः परिगृह्यते अभंगश्लेषइति तथाच श्लेषस्थले व्यंजनाविरहादप्रकृतेतरस्वीकारे श्लेषव्यवहारः सर्वेषामनुपपन्नः स्यादिति
भावः रम्याः इति माघएव द्वारकावर्णनं यस्यां हारकायां युवानो वधूभिः समं वलभीः प्रासादोपरितनगृहाणि अधिसेवंत सेवितवंतः किंभूताः रम्या इति हेतोः पता
कावैजयंतीः प्राप्तवतीः विविक्ताः विजना इति हेतोः रागं रतिं वर्द्धयंतीः नमंतिवल्लीकानिच्छादनपटलप्रांता यासां ताः वधूपक्षे पताकाः सौभाग्यानि पताकावै
जयंत्यो यासां सौभाग्यनारत्नकयोरिति मेदिनी रागमनुरागं विविक्ताः सतीत्वेन पवित्राः नमन्तिवल्लीकाश्चेति नचैनियतइत्यस्य इत्यत्रैवाक्षिप्तः श्लेषो भवेदित्यत्रे

नवविभक्तिभेदेपि तदन्वयापेक्षकं साधर्म्यमिह निवद्धमस्ति यतः एतस्मिन्नधिकपयः श्रियं वहंत्यः संक्षोभं पवनभुवा जवेन नीताः वाल्मी
केररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महसरस्यः इत्यत्रैवाक्षिप्तश्लेषो भवेत् समिमित्यत्र तु क्रियाविशेषणं सहार्थत्वेनाप्युप
पन्नं वधूषु श्लिष्टविशेषणायांन्वयात्साक् द्रागप्रतीतं साम्यं नालंवते तस्मादर्थसौंदर्यवलादेव न तदन्वयानुसंधानमिति गूढश्लेषः
तदनुत हुल्लादवसम शब्दस्य साधर्म्यार्थकल्पनमितिवाच्यस्यैवोपमालंकारस्यांगमयमित्यलं प्रपंचेन तस्मात्सिद्धं श्लेषत्रैविध्यं
एवं च श्लेषः प्रकारांतरेणापि द्विविधः संपन्नः उदाहरणगतेषु अब्जकीलालवाहिनी प्रत्यादिशब्देषु परस्परविलक्षणं पदभंगम
नपेक्ष्यानेकार्थक्रोडीकारादभंगः सर्वदोमाधवः पायांगांगाहरिणाहितसक्तिनेत्यादिशब्देषु परस्परविलक्षणपदभंगमपेक्ष्य नाना
र्थक्रोडीकारात्सभंगः श्लेष इति तत्र सभंगश्लेषः शब्दालंकारः अभंगश्लेषस्त्वर्थालंकार इति केचित् उभयमपि शब्दालंकार इत्यन्ये उ
भयमप्यर्थालंकार इति स्वाभिप्रायः एतद्विवचनं

तनेनान्वयः एतस्मिन्निति तत्रैव रैवतकगिरिवर्णनं एतस्मिन् नीरोमहत्यः सरस्यः वाल्मीकेर्मुनेर्गिरां
साधर्म्यं सादृश्यं दधति धारयंति किंभूतानां गिरां अरहितौ संवद्धौ रामलक्ष्मणौ यासु ताः यास्तासां सरसीपक्षे अरहिताः संयुक्ता रामाः पतयो यासां तथाभूता ल
क्ष्मणाः सारसवनिता यासु ता इति किंभूताः सरस्यः अधिकां जलशोभां वहंत्यः पवनसंभूतेन वेगेन संक्षोभं तरंगाकुलत्वं नीताः प्रापिताः वाल्मीकिगिरस्तु अधिकाः

कापयेयासुताः पवनभुवा हनूमता वेगेन निर्जेन संक्षोभमुद्गरत्वं प्रापिता इति नन्वत्रापि समसमित्यस्य तुल्यार्थत्वात्साधर्म्यनिबंधोऽस्तीति कुतो न श्लेषाक्षेपस्तत्रा
ह समसमिति द्विःकरणेऽपि साम्यार्थे साम्यार्थकत्वं तथा चानुपपत्त्यभावात्तन्मूलकस्याक्षेपोऽन संभवतीति भावः कथं तर्हि तदवगमस्तत्राह अर्थसौन्दर्येति त्रि
शेषणानां वधूभिरन्वये चमत्कृतेरनुसंधानात्तदन्वयतात्पर्यग्रह इति भावः तदनुश्लेषानुसंधानानंतरं तद्बलात्श्लेषबलात् साधर्म्यार्थेति साधर्म्यरूपार्थस्य
त्यर्थः अर्थसाम्याभावेऽपि सकलकलपुरमेतज्जातं संप्रति सुधांशुविंबमिवेत्यादिवच्छब्दसाम्यस्य संभवादिति भावः एवकारेण व्यंग्यत्वव्यवच्छेदः तत्रेत्यौपम्येत्रा

अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया एकः कृती शकुंतेषु योऽन्यं शक्रान्न याचते यत्राप्रस्तुतवृत्तांतवर्णनं प्रस्तुतवृत्तांतावगतिपर्यव
सायि तत्राप्रस्तुतप्रशंसालंकारः अप्रस्तुतवृत्तांतवर्णनेन प्रस्तुतावगतिश्चाप्रस्तुतप्रस्तुतयोः संबंधे सति भवति संबंधश्च सारूप्यं
सामान्यविशेषभावः कार्यकारणभावो वा संभवति तत्र सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्यावगतौ द्वैविध्यं कार्यकारणभा
वेऽपि कार्यात्कारणस्य कारणाद्वा कार्यस्यावगतौ द्वैविध्यं सारूप्यस्य त्वेक एव भेद इत्यस्याः पंचप्रकाराः यदाहुः कार्ये निमित्ते सामान्ये
विशेषे प्रस्तुते सति तदन्यस्य वचस्तुल्ये तुल्यस्येति च पंचधेति तत्र सारूप्यनिबंधनाऽप्रस्तुतप्रशंसोदाहरणं एकः कृतीति अत्र
अप्रस्तुतचातकस्य प्रशंसा प्रशंसनीयत्वेन प्रस्तुते तत्सरूपे सुहृद्भ्यो याचनान्निवृत्ते मानिनि पर्यवस्यति ६ ॥

द्वेति जतुकाष्ठन्यायेन शब्दयोरेव श्लिष्टत्वादिति भावः अर्थेति शब्दाभेदादेकवृंतगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वादिति भावः केचित् अलंकारस
वेत्स्वकारादयः उभयमपीति सभंगाभंगश्लेषद्वयमपीत्यर्थः शब्दस्य परिवृत्त्यसहत्वेनान्वयव्यतिरेकाभ्यां तद्गतत्वावधारणादिति भावः अन्ये मम्मट
भट्टाः नन्वभिप्रायस्यार्थालंकारमध्यकथनादेव तस्यापि विशेषतः कथनमंतरेण कथमुपपत्तिरित्याशंक्याह एतदिति यद्यप्युक्तेतद्ग्रंथानंतरं विमर्शिना
सानक्कापि दृश्यते तथाप्ययमाशय उन्नीयते चमत्कारेऽर्थमुखप्रेक्षित्वादर्थालंकारत्वमिति अनुप्रासयमकादेस्तु न चमत्कारेऽर्थमुखप्रेक्षित्वमिति न तेषाम

कु॰ टी॰ शब्दालंकारत्वमेवेति इत्यलंकारचंद्रिकायां श्लेषप्रकरणं अप्रस्तुतेति अप्रस्तुतप्रशंसा प्रस्तुताश्रया अप्रस्तुतमाश्रयः प्राधान्येन तात्पर्यविषयो यस्यास्तथाभूता
चं॰ प्रस्तुतपरमप्रस्तुतवर्णनमप्रस्तुतप्रशंसेत्यर्थः एकइति कृतीकृतान्तः शाकुंतेषु पक्षिषु मध्ये यस्मात्तकः शाकादिद्वारादन्यं न याचतइत्यर्थः कार्यइति कार्ये प्रस्तुते सति तद
४१ न्यस्य कारणस्य वचः प्रतिपादनं निमित्तकारणे प्रस्तुते सति तदन्यस्य कार्यस्य एवं सामान्ये प्रस्तुते सति तदन्यस्य विशेषे प्रस्तुते सति तदन्यस्य सामान्यस्य तुल्ये प्रस्तु
ते तदन्यस्य तत्सदृशस्येत्यर्थः अन्यशब्दस्य प्रतिसंबंधिपरत्वात् तत्सरूपे तत्सदृशे आबद्धेति आबद्धाः पाः कृत्रिमाः सटाः स्कंधलोमानि तैर्जटिला व्याप्ता अंस

यथावा आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा मत्तेभकुंभतटपाटनलंपटस्य नादं करिष्यति कथं हरि
णाधिपस्य अत्र शुनकस्य निंदानिंदनीयत्वेन प्रस्तुते तत्सरूपे कृत्रिमवेषव्यवहारादिमात्रेण विद्वत्ताभिनयवति वैधेये पर्यवस्यति
यथावा अंतश्छिद्राणि भूयांसि कंटका बहवो बहिः कथं कमलनालस्य माभूवन्भंगुरा गुणाः अत्र कमलनालवृत्तांतकीर्तनं तत्सरूपे
बहिः खले पुत्राद्यनुभ्रातृपुत्रादिभिरंतः कलहं कुर्वाणे पुरुषे पर्यवस्यति एवं चलस्य लक्षणयोः प्रशंसाशब्दः स्तुतिनिंदास्वरूपा
ख्यानसाधारणकीर्तनमात्रपरोद्रष्टव्यः सामान्यनिबंधना यथा विधाय वैरं सामर्षे नरोऽरौ य उदासते प्रक्षिप्योदर्चिषं कक्षे शेरते
तेऽभिमारुतं अत्र प्रागेव सामर्षे शिशुपाले रुक्मिणीहरणाद्वैरं दृढीकृतवता कृष्णेन तस्मिन्नुदासितुमयुक्तमिति वक्तव्येऽर्थे प्रस्तु
ते तत्समर्थनार्थं सामान्यमभिहितं यथावा सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषां परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥

भित्तिः स्कंधदेशो यस्यैवंभूतः श्वा शुनकः मृगपतेः सिंहस्य पदवीं स्थानं यद्यारोपितः तादृशसटायुक्तत्वेन सिंहसाम्यं प्रापितइत्यर्थः तथापि मत्तानामिभानां ग
जानां कुंभतटस्य पाटने विदारणे लंपटस्य व्यसनिनो हरिणानामधिपस्य नादं सिंहनादं कथं करिष्यतीत्यर्थः अभिनयवति अनुकुर्वतीति सप्तम्यंतं वैधेये मूर्खे
मूर्खे वैधेयबालिशावित्यमरः अंतरिति छिद्राणि रंध्राणि दोषस्थानानि च कंटकाः भूकाः खलाश्च भंगुराः भंगशीलाः गुणाः सौभाग्यादयः तंतवश्च ॥ ४

अप्रस्तुतिनिंदोदासीनस्वरूपाख्यानमात्रमिति श्लिष्टविशेषणत्वमिति च भेदः    एवं चेति उक्तोदाहरणेषु प्रस्तुतपरस्याप्रस्तुतवर्णनस्य निरूपत्वे सतीत्यर्थः विधाये
ति ये नराः मनुष्याः सक्रोधेऽरौ शत्रौ वैरं विधायोदासीना भवंति ते नैकस्तृणेऽप्यर्चिंषमग्निं निक्षिप्य अभिमारुतं पवनाभिमुखं धारंते निद्रां कुर्वंतीत्यर्थः सौहार्द इति सौ
हार्दानि मैत्र्याण्येव स्वर्णं रेखा इति रूपकेता सा परीक्षणे निकषोपलः परीक्षमिति संज्ञितः कोप्यलीत्यन्वयः अंकेति मृगलांछन इत्युच्यत इति शेषः निष्ठुरं क्षिप्ता

अत्र यदि त्वं प्रत्यक्षमिव परोक्षेपि मम हितमाचरसि तदा त्वमुत्तमः सुहृदिति विशेषवक्तव्यत्वेन प्रस्तुते सामान्यमभिहितं विशेषनिबं
धना यथा अंकाधिरोपितमृगश्चंद्रमा मृगलांछनः केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः अत्र कृष्णं प्रति बलभद्रवाक्ये मार्दवदूष
णपरे पूर्वप्रस्तावानुसारेण क्रूर एव ख्यातिभाग्भवति न तु मृदुरिति सामान्ये वक्तव्ये तत्स्थापनार्थमप्रस्तुतो विशेषोभिहितः एवं हृ
हृत्कथादिषु सामान्यतः कंचिदर्थं प्रस्तुत्य तद्विवरणार्थमप्रस्तुतकथाविशेषोदाहरणेष्वियमेवाप्रस्तुतप्रशंसा द्रष्टव्या कारणनिब
धना यथा हृतसारमिवेंदुमंडलं दमयंतीवदनाय वेधसा कृतमध्यबिलं विलोक्यते धृतगंभीरखनीखनीलिम अत्राप्राकरणिकेंदु
मंडलगततयोत्प्रेक्ष्यमाणेन दमयंतीवदननिर्माणार्थसारांशाहरणेन तत्कार्यरूपं वर्णनीयतयाप्रस्तुतं दमयंतीवदनगतलोकोत्तर
सौंदर्यं प्रतीयते यथा वा मदीयवरदराजस्तवे आश्रित्य नूनममृतद्युतयः पदं ते देहक्षयोपनतदिव्यपदाभिमुख्याः लावण्यपुण्यनिच
यं सुहृदि त्वदास्ये विन्यस्य यांति मिहिरं प्रतिमासभिन्नाः अत्राप्राकरणिके चंद्रकर्तृकतयोत्प्रेक्ष्यमाणेन लावण्यनिचयविन्यासे
न कारणेन तत्कार्यमनंतकोटिचंद्रलावण्यशालित्वमनन्यमुखसाधारणं भगवन्मुखे वर्णनीयतया प्रस्तुतं प्रतीयते तथाहि ॥

निनिरस्तानि मृगयूथानि येन तादृशः केसरी सिंहो मृगाधिप इत्युच्यत इति शेषः हृतेति धृतो गंभीरः खन्यां गर्ते खस्याकाशस्य नीलिमा येनेति मंडलविशेषणम्
म् आश्रित्येति हे देव प्रतिमासं भिन्ना अमृतद्युतयश्चंद्रास्ते विष्णोः पदमाकाशमेव पदं चरणमाश्रित्य देहस्य क्षये उपनतं संपन्नं दिव्यपदस्याभिमुखत्वं येषां ते

कु॰ टी॰ संतत्त्वदास्यरूपेसुहृदिमित्रेन्दनेलावण्यसरूपस्यपुण्यस्यनिचयदविन्यस्यमिहिरंत्वसंक्रांतियांतीत्यन्वयः मंत्रलिंगादितिनवोनवोभवतिजायमानइत्यादिमंत्रसा
चं॰ मर्थ्यादित्यर्थः मंत्रस्यमानांतरसिद्धार्थानुवादकत्वादाह द्वन्द्वीतिश्रुतीति तत्सुकृतदुष्कृतेविधूनुतेतस्यप्रियाज्ञातयः सुकृतमुपयंतिअप्रियादुष्कृतमितिकौषीत
४२ कीश्रुतिःसयावत्क्षिप्येन्मनस्तावदादित्यंगच्छतीतिसवायुमागच्छतिसतत्रविजिहीतेयथारथचक्रस्यखंतेनसऊर्ध्वआक्रमतेसआदित्यमागच्छतीतिचश्रुतेः

चंद्रस्तावन्मंत्रलिंगाद्धिसपाम्पामभेदेपिभेदाध्यवसायाद्वाप्रतिमासंभिन्नत्वेनवर्णितः तेनातीताश्चंद्रा अनंतकोटयइतिलब्धं का
लस्यानादित्वात्सर्वेषांचतेषामाकाशसमाश्रयणश्लेषमहिम्नाभगवच्चरणसमाश्रयत्वेनाध्यवसितेभगवच्चरणंप्रपन्नानांचदेहस्य
योपस्थितौपरमपदप्राप्त्याभिमुख्यंतदानीमेवस्वसुहृद्वर्गेस्वकीयसुकृतस्तोमनिवेशनं ततःसूर्यमंडलप्राप्तिश्चेत्येतत्सर्वंश्रुति
सिद्धमिति तदनुरोधेनतेषांदेहक्षयकालस्यामावास्यारूपस्योपस्थितौसूर्यमंडलप्राप्तेःप्राक्प्रत्यक्षसिद्धंपुण्यत्वेननिरूपितस्य
लावण्यस्यप्रहाणंनिमित्तीकृत्यतस्यचंद्रसादृश्यस्वरूपोपचरिततत्सौहार्दंवतिभगवन्मुखेन्यसनमुत्प्रेक्षितं यद्यपिसुहृद्वृंद
त्वेनावदल्पपुण्यसंक्रमोभवति तथापिअत्रसुहृदित्येकवचनेनभगवन्मुखमेवचंद्रस्यसुहृद्भूतंनमुखांतराणिचंद्रसादृश्यगंध
स्याप्यदानीतिभगवन्मुखस्येतरमुखेभ्योव्यतिरेकोपिव्यंजितः ततश्चतस्मिन्नेवसर्वेषांस्वस्वपावच्छावण्यविन्यसनोत्प्रेक्षणेनप्राग्वा
र्णितःप्रस्तुतोर्थःस्पष्टमेवप्रतीयते यद्यपिश्रुतौसूर्यमंडलप्राप्त्यनंतरभाविविरजानदीक्रमणानंतरमेवसुहृत्सुकृतसंक्रमणंश्रूयते त
थापिशारीरकशास्त्रेतस्यार्थवादात्क्रमाभावःस्थापितइतितदनुसारेणविन्यस्यमिहिरंप्रतियांतीत्युक्तं कापिनिबंधनापथा नाथत्वदंघ्रि
नखपावनतोयलग्ना त्वत्कांतिलेशकणिका जलधिंप्रविष्टाः

सआदित्यमागच्छतीत्यनंतरंसआगच्छतिविरजांनदींतांमनसैवात्येतितत्सुकृतदुष्कृतेविधूनुतइतिश्रु
तौशारीरकेति शारीरेभवः शारीरः सएवशारीरकआत्मातत्प्रतिपादकेत्यर्थः अर्थवशात्पाठक्रमनवशात् पूर्वपापादित्यागाभावेविरजादिमार्गप्राप्तिपूर्वकत्व
स्याभावेऽसंभवेनपाठक्रमस्यार्थक्रमेणबाधादितिभावः
स्थापितइति

तां प्राप्येत तन्नखाभावात तथाह्यन्यदिति तानीयाधिकरणे सिद्धांतितं इत्यर्थः नाथेति हे नाथ विष्णो त्वच्चरणनखप्रक्षालनजले गंगारूपे लग्नाः तेषां नखानां कांतिलेशकणिकाः भ
समुद्रं प्राप्ताः ताएव च कणिकास्तस्य जलधेर्मथनेन सांद्रतां प्राप्ता नूनं समुद्रसंबंधिनवनीतस्य चंद्रस्य पदं प्राप्ताः चंद्ररूपेण परिणता इत्यर्थः तया तद्द्वारेण तदित्यनंत
रहेतुरिति शेषः तद्धेतुर्नखकांत्युत्कर्ष इत्यर्थः अस्याश्चेदिति अस्याः कामित्यागतिसौकुमार्यं दृष्टं चेदित्यध्याहारेणान्वयः एवं संलापो भाषणं यदि श्रुतस्तदा प
रभृतैः कोकिलैर्वाचं यच्छतीति तथा तत्स्वभावो मौनमेव व्रतं साध्यतां अकठोरतामार्दवं यदि दृश्यते तदा सा प्रसिद्धा मालती दृषत्सापेव पाषाणतुल्यैव कलस्पत

ताएव तस्य मथनेन घनीभवंत्यो नूनं समुद्रनवनीतपदं प्रपन्नाः भगवत्पादांबुजक्षालनरूपायां दिव्यसरित्यलकं करसादिवल्लना
नां तया सह समुद्रं प्रविष्टानां तन्नखकांतिलेशकणिकानां परिणामतया संभाव्यमानेन समुद्रनवनीतपदवाच्येन चंद्रेण कार्येण तेन
खकांत्युत्कर्षः प्रतीयते यथा वा अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतं अंगाना
मकठोरता यदि दृषत्प्रायैव सा मालती कांतिश्चेत्कमला किमत्र बहुना काषायमालंब्यतां अत्र नायिकागतिसौकुमार्यादिषु वर्णनीय
त्वेन प्रस्तुतेषु हंसादिगतगर्वशांत्यादिरूपाणि औचित्येन संभाव्यमानानि कार्याणि अभिहितानि एतानि च पूर्वोदाहरणद्वयवस्तुका
र्याणि किंतु तन्निरीक्षणकार्याणि लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्या तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथि १८
लं चमर्य इति उदाहरणांतरे तथेदस्पष्टं अंगानामकठोरतेति तृतीयपादे तु वर्णनीयांगसौकुमार्यातिशयनिरीक्षणकार्यत्वम

इति कांतिर्दृष्टा चेत्तदा कमला लक्ष्मीः काषायं वस्त्रमालंब्यतामाश्रयतु किमत्र बहुनोक्तेनेत्यन्वयः गत्यादिषु गतिसौंद पिनार्थोऽस्त्यमालतीकठोरत्वेवि
दर्पादिषु संभाव्यमानानि उत्प्रेक्ष्यमाणानि पूर्वोदाहरणाद्वैलक्षण्यमाह एतानीति कार्याणीत्यर्थः लज्जेति तिरश्चां पश्वादीनां चेतसि यदि लज्जा स्यात्तदा चमर्यः गोमृ
गाः पर्वतराजपुत्र्याः स्तुत्या रमणीयं केशपाशं प्रसमीक्ष्य वालाः केशाः प्रिया यासां ताः तथा तत्त्वं शिथिलं कुर्युरित्यन्वयः तत्रैव निरीक्षणकार्यत्वमेव अर्थांतरेऽपीति ॥

कृ॰टी॰ दृषत्वापलस्त्रपार्याक्षिप्तेत्यर्थः इदमपि अप्रस्तुतवृद्धेः कार्यत्वेऽपि अपिनाप्रस्तुतवृद्धेः कारणत्वेनागुरुसमुच्चीयते त्वदंगमार्दवे दृष्टे कस्य चित्ते न भासते मालतीश

वं॰ शभृत्लेखाकदलीनांकठोरतेति तुल्ययोगितायांप्रागुदाहृतं ननुकार्यरूपेऽप्यप्रस्तुते तार्थेन यत्र प्रस्तुतस्य कारणत्वमवगम्यते सा कार्यनिबंधना अप्रस्तुतप्रशंसोच्यते

४३ नवोदाहृते प्रस्तुतसंभवः मालतीकठोरत्वादेरप्रस्तुतस्यार्थस्याकार्यतायास्त्वयैव दर्शितत्वात् एवं प्रस्तुतस्य कामिनीगतिनिष्ठसौंदर्यातिशयादेर्निरीक्षणस्यैव कारण

प्रतियोगिविशेषापेक्षकठोरत्वस्य तदकार्यत्वात् किंतु तद्बुद्धेरेव इदमपि त्वदंगमार्दवे दृष्ट इत्याद्युदाहरणांतरे तथैव स्पष्टं अर्थस्यका

र्यत्वइव वृद्धेः कार्यत्वेऽपि कार्यनिबंधनत्वं न हीयत इति एतादृशान्यपि कार्यनिबंधनाप्रस्तुतप्रशंसायामुदाहृतानि प्राचीनैः वस्तुतस्तु

तदतिरेकेऽपि न दोषः नह्यप्रस्तुतप्रशंसायां प्रस्तुताप्रस्तुतयोः पंचविध एव संबंध इति नियंतुं शक्यते संबंधांतरेष्वपि तद्दर्शनात् य

था तापत्रयौषधवरस्य तव स्मितस्य निश्वासमंदमरुतानिबुसीकृतस्य एते कडंकरचयाइव विप्रकीर्णा जैवातृकस्य किरणा जगति

भ्रमंति अत्र ह्यप्रस्तुतानां चंद्रकिरणानां भगवन्मंदस्मितरूपदिव्यौषधधान्यविशेषकडंकरत्वयत्वोत्प्रेक्षणेन भगवन्मंदस्मित

स्य तत्सारतारूपः कोऽप्युत्कर्षः प्रतीयते न च धान्यकडंकरत्वयोः कार्यकारणभावादिसंबंधोऽस्ति अतः सहोत्पत्त्यादिकमपि संबं

धांतरमाश्रयणीयमेव एवमुपमानोपमेययोर्वाश्रित्य तत्र कविकल्पितकार्यकारणभावनिबंधने अप्रस्तुतप्रशंसे दर्शिते ततोऽन्य

त्रापि दृश्यते यथा कालिंदि ब्रूहि कुंभोद्भव जलधिरहं नाम गृह्णासि कस्माच्छत्रोर्मे नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः

त्वेन स्वरूपतस्तस्याकारणत्वादित्यत आह अर्थस्येति अप्रमाणयः अर्थस्याप्रस्तुतत्वे सुतरां तद्बुद्धेरप्रस्तुतत्वात् कार्यत्वाच्च न तावदप्रस्तुतकार्यत्वांशासंभ

वः अर्थत्वस्य प्रयोजनाभावेन लक्षणे अनिवेशाद्व्यावर्तकत्वाच्च नापि प्रस्तुतस्य कारणत्वांशस्यासंभवः स्वरूपतस्तस्याहेतुत्वेऽपि ज्ञातस्य हेतुत्वादिति ननु ग

तिसौंदर्यादेर्ज्ञानमेव हेतुर्न तु ज्ञायमानं गतिसौंदर्यादि तदभावेऽपि ज्ञानमात्रात्कार्योत्पत्तेरित्यस्वरसादाह प्रस्तुतस्त्विति तदतिरेके तस्याः प्राचीनोदाहृतताप्रस्तु

तप्रशंसाया अतिरेके प्रकारपंचकाधिक्य

नापेति हे हरे तव निश्वासरूपमंदमारुतेन निवुसीकृतस्य वुसरहितीकृतस्य स्मितरूपस्य आध्यात्मिकादितापत्रयौषधश्रेष्ठस्यापि प्रकीर्णाः कंडकरच धावुससम् हाइवेतेजैवातृकस्य चंद्रस्य किरणा जगति भ्रमंतीत्यन्वयः तत्सारतारूपः किरणसारतारूपः एवमिति त्वत्तसारमित्युदाहरणे चंद्रवदने उपमानोपमेयपदा यौवाश्रित्य चंद्रसारां त्राहरणस्य सतः कविप्रौढोक्तिकल्पितं कारणत्वं एवमन्येष्वपि द्रष्टव्यम् कालिंदीति नर्मदायाः समुद्रस्य च संवादोयं तत्र यमुनान्त्रास्या। समुद्रेण कालिंदीत्युक्ते कोपात्साकूतं नर्मदाया उत्तरं हे कुंभोद्भव अगस्त्यमुने ब्रूहीति ततः पुनः समुद्रस्य प्रतिवचनं अहं जलधिर्भवामि मम शत्रोर्नाम कस्मा

मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीनां नेत्रांभोभिः किमासां समजनि कुपितः कुंतलक्षोणिपालः अत्र किमासांसम
जनीति मालवीनां तया रोदनस्य निमित्ते पृष्टे तत्प्रियमरणरूपनिमित्तमनाख्याय कुपितः कुंतलक्षोणिपाल इति तत्कारणमभिहि
तमिति कारणनिबंधना मालवान्प्रति प्रस्थितेन कुंतलेश्वरेण किं तेनाश्रिता इति पृष्टे तद्युद्धानंतरभाविजलधिनर्मदाप्रश्नोत्तररूप
कार्यमभिहितमिति अत्रैव कार्यनिबंधनापि पूर्वस्यां प्रश्नः शाब्दः अस्यामार्थ इति भेदः प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः किंभृं
गसत्यां मालत्यां केतक्या कंटकेद्धया यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत्प्रस्तुतं द्योत्यते तत्र प्रस्तुतांकुरालंकारः उत्तरार्द्धमुदाहरणं
इह प्रियतमेन साकमुद्याने विहरंती काचिद्भृंगप्रत्येवाहेति वाच्यार्थस्य प्रस्तुतत्वं न चानामंत्रणीयामंत्रणेन वाच्यासंभवादप्रस्तुतमेव
वाच्यमिह स्वरूपप्रस्तुतावगतये निरिष्ट

हेतोर्गेह्वासीति सा पुनराह नर्मदाहमित्यादि ततः समुद्रः पुनराह तर्हि कुतो मालिन्यमनुभवसीति सा पुन राह मिलत्कज्जलैर्मालवदेशांगनानां नेत्राश्रुभिरिति ततः किमासां जातमिति समुद्रस्य प्रश्नः कुंतलदेशाधिपः कुपित इति नर्मदाया उत्तरमिति इत्यलंकारचंद्रि कायामप्रस्तुतप्रशंसाप्रकरणं प्रस्तुतेनेति प्रधानभूतप्रस्तुतांतराभिव्यंजकप्रस्तुतवर्णनं प्रस्तुतांकुरालंकारः प्रस्तुतस्याभिव्यंजकत्वादंकुर इवांकुर इति व्युत्प ते किमिति हे भ्रमर मालत्यां विद्यमानायां कंटकेद्धया कंटव्याप्तया केतक्या किं प्रयोजनमिति प्रस्तुतेन भ्रमरवृत्तांतेन ममपि मनोहारिण्यां सत्यां किमुद्वेगकारिण्या पर

मितिवाच्यं

वनितयेतिनायकरतोतः

प्राधान्येनप्रस्तुतोऽभिव्यज्यते कथमिहभृंगवृत्तांतस्यप्रस्तुतत्वं तत्राह इहेति तथाचभृंगसंबोधकत्वात्तद्वृत्तांतोऽप्रस्तुतइतिभावः अनामंत्रणीयामंत्रणेन संबो
ध्यतायोग्यसंबोधनेनवाच्यासंभवात् भृंगसंबोध्यकवाच्यार्थासंभवात् कस्त्वमिति शाखोटकतरुं प्रतिकस्यचित्पथिकस्यप्रश्नोक्तिः कथयामीत्याद्युत्तरं वैराग्या
दिववदसीतिपुनः प्रश्नः साधुविदितमितिशाखोटकस्योत्तरं कस्मादिदं वैराग्यमितिपुनःप्रश्नः कथ्यतइतिपुनरुत्तरं प्रतिज्ञायशाखोटकआह वामभागेनो

मेत्यादिनाभृंगादावप्यामंत्रणस्यलोकेदर्शनात् यथा कस्त्वंभोः कथयामि दैवहतकंमांविद्धिशाखोटकंवैराग्यादिववक्षिसाधुविदि
तंकस्मादिदंकथ्यते वामेनात्रवटस्तमध्वगजनः सर्वात्मनासेवतेनच्छायापिपरोपकारकरिणीमार्गस्थितस्यापिमे इत्यत्रचेतनाचेत
न प्रश्नोत्तरवत्तिर्यगामंत्रणस्यात्यंतमसंभावितत्वाभावात् एवंप्रस्तुतेनवाच्यार्थेनभृंगोपालंभरूपेणवच्च्याः कुलवध्वाः सौंदर्या
भिमानशालिन्याः क्रूरजनपरिवृत्तिदुःप्रधर्षायांपरवनितायांविटसर्वस्वापहरणसंकल्पदुःसदायांवेश्यायांवाक्कंटकसंकुलकेत
कीकल्पायांप्रवर्तमानंप्रियतमंप्रत्युपालंभोद्योत्यते यथावा अन्यासुतावदुपमर्दसहासुभृंगलोलंविनोदयमनःसुमनोलतासुबाला
मजातरजसंकलिकामकालेव्यर्थंकद र्थयसिकिंनवमल्लिकायाः अत्राप्युद्यानमध्येचरंतंभृंगंप्रत्युपालंभइतिवाच्यार्थस्यापिप्रस्तु
तत्वं इदंचप्रौढांगनासुसतीषुबालिकांरतयेक्लेशयतिकामिनिशृण्वतिकस्याश्चिद्विदग्धायावचनमितितंप्रत्युपालंभोद्योत्यते॥
यथावा कोशद्वंद्वमियंदधातिनलिनीकादंबचंचूक्षतंधत्तेचूतलतानवंकिसलयंपुंस्कोकिलास्वादितंइत्याकर्ण्यमिथः सखीजनवचः
सादीर्घिकायास्तटेचैलांतेनतिरोदधेस्तनतटंवि

बाधरंपाणिना

पलस्थितोऽत्रवटोऽस्तितंपांथोजनः सर्वात्मनासमित्यच्छायादिभिः सेवतेआश्रयतिममपुनर्मार्गस्थि
तस्यापिनच्छायापिपरोपकारसंपादिकेतिभूताधारत्वादितिभावः वामेनेति मार्गेतिचश्लिष्टं अत्यंतं आरोपेणापि परवनितायामिति वेश्यायामितिचविषय
सप्तमीतद्विषयेइत्यर्थः विटानासर्वस्वस्यापहरणेयः संकल्पस्तेनदुःप्रापेतिवेश्याविशेषणं अन्येतिहेभृंगअन्यासूपमर्दक्षमासुसुमनसांपुष्पाणांलतासुता

वत् नवमल्लिकायाः कलिकासंजातरजस्काभवति

लोलंचपलंमनोविनोदय लोलमितिक्रियाविशेषणंवा नव मल्लिकापालताविशेषस्तस्वालामभिनवांसंजातरजस्कांकलिकामकालेत्य पंकिमितिकदर्थयसिपी
डपसीत्यन्वयः रजःपुष्परजः स्त्रीणांरेतश्च स्पृष्वतीति गतइत्वनंभृण्वतिसतीत्यर्थः कोशेति। इयंनलिनीकमलिनीकोशाद्वंद्वंमुकुलयुगलंकादंवस्यहंसस्यचंद्रा।
क्षतंक्षतंदधातिपतेत्तथेयं चूतस्याम्रस्यलतांनूतनपल्लवं पुरूपैः कोकिलैरास्वादितंचर्वितंधत्तेइतिदीर्घिकायावाप्यास्तटेमिथः परस्परंसखीजनस्यवच्या

अत्रेयमितिनलिनीव्यक्तिविशेषनिर्देशेनदीर्घिकायास्तटइत्यनेनचवाच्यार्थस्यप्रस्तुतत्वंस्पष्टं प्रस्तुतांतरद्योतनंचोत्तरार्धेस्वयमेवक
विनाविस्फुलंअत्रास्योदाहरणयोरन्यापदेशध्वनिमाहलोचनकारः अप्रस्तुतप्रशंसायांवाच्यायोः प्रस्तुतत्वादवर्णनीयइतितत्राभि।
धायामपर्यवसितायांतेनप्रस्तुतार्थव्यक्तिरलंकारः इहतुवाच्यस्यप्रस्तुतत्वेनतत्राभिधायांपर्यवसितायामर्थसौंदर्यवलेनाभिमतार्थ
व्यक्तिर्ध्वनिरेवति वस्तुतस्त्वयमप्यलंकारएवनध्वनिरितिव्यवस्थापितंचित्रमीमांसायां तृतीयोदाहरणस्यत्वलंकारत्वेकस्यापिन
विवादः उक्तेहिध्वनिकृता शब्दार्थशक्त्याक्षिप्तोपिव्यंग्योर्थःकविनापुनर्यत्राविष्क्रियतेस्वोक्त्यासान्येवालंकृतिर्ध्वनेरिति एतान्यपि
सारूप्यनिवंधनान्युदाहरणानि संवंधांतरनिवंधनान्यपिकथंचिद्वाच्यव्यंग्ययोःप्रस्तुतत्वनिवंधनेनोदाहरणीयानि दिङ्मात्रमुदा
ह्रीयतेरात्रिःशिवाकाचनसन्निधत्तेविलोचनेजागृतमप्रमत्तेसमानधर्मायुवयोःसकाशेसखाभविष्यत्यचिरेणकश्चित् अत्रशि मू
वसारूप्यमिवतदेकदेशतपातद्वाव्यंलन्नाट लोचनमपिशिवरात्रिमाहात्म्यप्रयुक्तत्वेनवर्णनीयमितितन्मुखेनकृतत्वंशिवसारूप्य

कर्ण्यसाप्रस्तुतानायिकाकमलमुकुलाम्रपल्लवव्याजेनैतामदीयस्तनाधरक्षतवृत्तांतंकथयंतीतिज्ञात्वानैनस्यवस्त्रस्यांतेनप्रांतेनस्तनतटंतिरोदधेविवरू
पमधरंस्वपाणिनातिरोदधे आच्छादितवतीत्यन्वयः अन्यापदेशेति अन्यस्यापदेशोमिथ्यामा [illegible] इत्यर्थः तदीयमवयंयदर्शयति अप्रस्तुतेत्यादिव्यव
स्थापितम्भिति प्रस्तुतत्वेपिमुरमतयातात्पर्याभावादन्याप्यभिधापर्यवसानाभावादिति [illegible] अलंकृतिर्ध्वनेःसकाशादन्यैवेत्यर्थःप्रस्तुतत्वंभ्ये

हेविलेविनेशिवाकल्याणरूपाकाचनअनिर्वचनीयप्रभावारात्रिः शिवरात्रिरित्यर्थः संनिधत्ते संनिहिताभवति अतः युवां अप्रमत्ते जागृतं जाग्रद्रूपे भवतंकुतस्त॥
त्राह युवयोरन्तकाशेसमीपेअचिरेणसमानधर्मासदृशःसखाकश्चिद्भविष्यति तृतीयंलोचनंभालेभविष्यातीत्यर्थः तदेकदेशतयेतिशिवरात्रिमाहात्म्यप्र
युक्तत्वेहेतुः तच्चवर्ण्यत्वे तद्वाच्य उदाहृतकाव्यवाच्यं एवंचैकदेशपेकदेशभावसंबंधनिबंधनत्वमत्र दर्शितंवहंतीति भगवत्याःसीमंतवर्णनमिदं अपिशिवे
नवसीमंतसरणिःनः क्षेमंतनोत्वित्यन्वयः कीदृशी सिंदूरंवहती किमिवप्रवलानांकेशपाशरूपांधकारदीप्तीनांसमूहैर्वंदीकृतंवालार्ककिरणमिवसरणिः

यथावा वहंतीसिंदूरंप्रवलकवरीभारतिमिरत्विषांवृंदैर्वंदीकृतमिवनवीनार्ककिरणं तनोतुक्षेमंनस्तववदनसौंदर्यलहरीपरीवा
हस्रोतःसरणिरिवसीमंतसरणिः अत्रवर्णनीयत्वेनप्रस्तुतायाः सीमंतसरणेर्वदनसौंदर्यपरीवाहस्रोतस्त्वोत्प्रेक्षणेनपरिपूर्णतया
कवत्परीवाहकारणीभूतास्वस्थानेअमांतीवदनसौंदर्यसमृद्धिःप्रतीयते सापिवर्णनीयत्वेनप्रस्तुतैव यथावा अंगासंगिमृणा॥
लकांडमयतेभृंगावलीनांरुचंनासामौक्तिकमिंद्रनीलसरणिंश्वासानिलाद्गाहते दत्तेयंहिमवालुकापिकुचयोर्धत्तेक्षणंदीपतां
तप्तायःपतितांबुवत्करतलेधारांबुसंलीयते अत्रनायिकायाविरहासहत्वातिशयप्रकटनायसंतापवर्णनात्पाणिमृणालमालि॥
न्यादीन्यपिवर्णनीयत्वेनविवक्षितानीतितन्मुखेनसंतापोवगम्यः यत्रकार्यमुखेनकारणस्यावगतिरपिश्लोकेनिवद्धानतत्रायम
लंकारःकिंत्वनुमानमेव यथा परिम्लानंपीनस्तनजघनसंगादुभयतस्तनोर्मध्यस्यांतःपरिमिलनमप्राप्यहरितं इदंव्यस्तन्यासं

तापंवदतिनलिनीपत्रत्रायणं

केवलद्वदनसौंदर्यलहरीणांपरीवाहरूपास्रोतसःसरणिरिवेतिप रीवाहोजलनिर्गममार्गःजलोच्छ्वासः प्रशिथिलभुजाक्षेपवलनैःकृशांग्याःस
परीवाहात्स्मरः अं गेतिविरहसंतापवर्णनं अंगसंवद्धमृणालकांडभृंगेभ्योविशेषरहितांतत्समांरुचंकांतिमयतेप्राप्नोति तापातिशयेनमलिनीभावात्
नासामौक्तिकंश्वासानिलादत्युष्णाद्धेतोरिंद्रनीलमणेः पदवींतत्साम्यंगाहतेप्राप्नोति तथाकुचयोर्दत्तानिहितेयंहिमवालुकाकर्पूरंक्षणंदीपरूपतांधत्ते

कु॰ टी॰ चं॰ ४६

नमो राहुशिरश्छेदकारिणे दुःखहारिणे इत्यत्र न पर्यायोक्तप्रसंगः स्वासाधारणरूपेण वासुदेवत्वेन पनु राहुशिरश्छेदकारित्वरूपव्यंग्यमादायैव पर्यायोक्तं वक्तु
मर्हं न तु विशेषणसामर्थ्यलभ्यं वासुदेवत्वमादायेति तदयुक्तं राहुशिरश्छेदकारित्वस्य वाच्यसिद्ध्यंगत्वेन तेनापि विवक्षितं व्यंग्यं प्रधानभूतं वासुदेवत्वं त
दादायैव तत्कथनौचित्यात् राहुस्त्रीकुचवैफल्यकारिणे हरये नम इत्यत्र तु राहुशिरश्छेदकारित्वमेव विवक्षितं व्यंग्यमिति युक्तं तदादाय पर्यायोक्तमिति
विभावनीयं लोकमिति यस्याक्षपादस्यांघ्रिः लोकं पश्यति अयं च सः लोकः यस्य पतंजलेः शेषावतारस्यांघ्रिं न पश्यति उरगत्वात् ताभ्यां अक्षपादपतंज
लिभ्यां अपरिच्छेद्या अनाकलनीया निवेद्यतामिति न त्वं प्रतिदमयं त्वाउक्तिः तव अल्पदयं मनः कर्तृ शिरीषकलिकामृदुत्वाभिमानमपनयतेति दूमोपा

अत्र यस्य वेदा वाहा भुजंगमा भूषणानीत्यादितद्वाक्यार्थमवस्थितौ वेदत्वाद्याकारेण गम्या एव वेदादयो व्यासप्रमुखविनेयत्वाद्याका
रेणाभिहिताः परं तु देवतासार्वभौमत्वस्फुटीकरणाय विशेषणविशेष्यभावव्यत्यासेन प्रतिपादिताः अत्रालंकारसर्वस्वकृता विप
र्यायोक्तस्य संप्रदायागतमिदमेव लक्षणमंगीकृतं गम्यस्यापि भंग्यंतरेणाभिधानं पर्यायोक्तमिति चक्राभिघातप्रसभाज्ञयैव चका
रयो राहुवधूजनस्य आलिंगनोद्दामविलासवंध्यं रतोत्सवं चुंबनमात्रशेषमिति प्राचीनैस्तदुदाहरणं तन्न्याययोजितं राहुवधूग
तेनाविशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपो गम्यत इति एवं च गम्यस्यैवाभिधानमिति लक्षणस्यानुपपत्तिमाशंक्याह यद्ग
म्यं तस्यैवाभिधानायोगात्काया

टीकिय दूरपर्यंतम पासे निधातुमिच्छ निहंत स्वेदे ए तन्निवेद्यतां कथ्यतामित्यर्थः देवमिति देवतासार्वभौमं सकल
देवताऽधीश्वरं देवं वदेकौ दृशं जलधिरेव शारधिस्तूणं यस्य तथाभूतं त्रिपुरसंहारे शरीकृतस्य विष्णोर्विश्रांतिस्थानत्वात् तथा भुवनेषु विदिताः ख्याताः व्यास
प्रष्ठोऽग्रो येषां ते व्यासप्रमुखा वसिष्ठाद्याः यस्य वाहानां वाहनानां वेदानां अधिवाहा अवाहनाधिकृता भवंति पुरोगाग्रेसरप्रष्ठाग्रतः सरपुरः सरा इत्यमरः एव
म परं भुवनं पातालं भूषणपेटिका सर्पभूषणत्वात् पुष्करमाकाशं पुष्पवाटिकापुष्पस्थानीयं चंद्रो द्रुमाधारत्वात् शतमख इंद्रस्तत्प्रमुखा अग्न्यादयः दिक्पालाः

शाटीपालनाधिकृताः दिगंबरत्वेन दिशामेव शाटीरूपत्वात् मनोभूश्चंदनतरुः चंदनस्थानीयभस्मसंबंधित्वात् मदनभस्मना शिवेनांगानामनुलेपनस्य पुराणेषु प्र
सिद्धेः अत्र लक्षणां संगमयति अत्रेति अवस्थितौ विवक्षायां सत्यां अवगम्याः अध्यायाः विनेयत्वेति शिक्षणीयत्वेत्यर्थः आदिना पातालगुप्तत्वादिपरिग्रहः अ
भिहिता इति वाहाद्यधिकृतत्वादिना व्यासादिमतिपत्तौ समानवित्तिवेद्यत्वेन व्यासादिविनेयत्वादिरपि ते स्ववगमादितिभावः साक्षादेव व्यासादिविनेयत्वाद्याकारेण
किमित्तिन निर्दिष्टाइत्याशंक्याह परंत्विति पद्यस्युक्तविशेषणमावेपि दैवतासार्वभौमत्वमवगम्यते तथापि स्फुटप्रतिपत्त्यर्थं तद्वैपरीत्यं कृतमित्यर्थः चक्रेति यो
देवः सुदर्शनचक्रस्याभिघाते याप्रसभं आज्ञात पैवराहुवधूजनस्य सुरतोत्सवं आलिंगनस्य उद्दामा उद्दाम दायेविलासास्तैर्वंध्यं रहितं चुंबनमात्रावशेषं चका
रेत्यन्वयः विशिष्टेन उक्तविशेषणविशिष्टेन एवंच ईदृशोदाहरणयोजनैव अनुपपत्तिमिति गम्यस्य राहुशिरश्छेदस्य भंग्यंतरेणानभिधानाद्व्याभिमाशा॥

लक्षणे विवक्षितमिति लक्षणं क्लिष्टगत्यायोजितं लोचनकृता पर्यायोक्तं यदन्येन प्रकारेणाभिधीयत इतीदमेव लक्षणमंगीकृत्य
तदुदाहरणेच कार्येण शब्दाभिहितेन कारणं व्यंग्यं प्रदर्श्य तत्र लक्षणं लक्ष्यनाम च क्लिष्टगत्यायोजितं वाच्यादन्येन प्रकारेण व्यं
ग्येनोपलक्षितं मयदभिधीयते न तत्पर्यायेण प्रकारांतरेण व्यंग्येनोपलक्षितमुक्तमिति सर्वोपि क्लेशः किमर्थं इति न विद्मः ॥

कोन्यर्थः अभिधानायोगादिति अयमाशयः अत्र हि राहुशिरश्छेदकारीति वासुदेव इति वा व्यंग्यं राहुवधूजनसंबंधिताद्दशरतोत्सवकारित्वेन प्रकारांतरेणा
भिधीयत इति न वक्तुं शक्यं धर्मिणो वासुदेवस्य प्रक्रांतत्वेन यच्छब्दाभिहितत्वेन च व्यंग्यत्वायोगात् व्यंग्यस्य च राहुशिरश्छेदकारित्वस्य वासुदेवत्वस्य वा
धर्मस्य प्रकारांतरेणानभिधानात् तस्मात्पर्यायेण कार्यादिद्वारेणोक्तं गम्यमाक्षिप्तमेवेति लक्षणार्थ इति अभिधानं आक्षेपो व्यंजनं वा पर्यायोक्तमिति कवि
त्पर्यायोक्त इति पाठस्त्वयुक्तः व्यंग्येनोपलक्षितमुक्तमिति व्याख्यानं ग्रंथविरोधात् न विद्म इति यच्छब्दाभिहितस्यापि भगवतो वासुदेवत्वादिना रूपांतरेण व्यं
ग्यत्वाय याञ्चुनर्वोधकाभावादितिभावः न वाभिधाविषये कथं व्यंजनेति वाच्यं वासुदेवत्वादिगतत्वोपमाने भगवत्यभिधाविषयत्वासंभवात् ॥

नस्याः स्वावच्छेदकधर्मेणैव वोधकत्वात्र अतएवोक्तं प्राकाराद्यन्येन रूपेण ज्ञाते भवतीति लक्षणेति इह तु लक्षणाहेत्वभावाद्व्यंजनोपगम्यं तदिति ननु प्रस्तुतेन तादृ
शरतो स्वरूपेण कार्येण प्रस्तुतस्यैव राहुशिरश्छेद रूपकारणस्य प्रतीतौ चमत्कृतिविशेषस्तस्या अलंकारत्वं गमयति तच्चालोच्यमानं प्रस्तुतशंसाया अ
संभवादुक्तरीत्या पर्यायोक्तरूपतयैव स्वीकर्तव्यमित्याशंक्याह यत्त्विति अलंकाराणामियतानिमाभावेन प्रस्तुतांकुरस्याप्यलंकारांतरत्वादेवंविधशब्दस्या
रस्यभंगेन प्राचीनलक्षणव्याख्यानमयुक्तमिति भावः संक्षेपतो दर्शितमपि पर्यायोक्तं निद्रादयति प्रस्तुतेनेत्यादिना यत्तु भगवद्रूपेणावगमने विशेषणमर्था
दालभ्यत्वेनासुंदरं पर्यायोक्तस्य विषय इति तदविचारितरमणीयं नहि पर्यायोक्ते व्यंग्यसौंदर्यकृतो विच्छित्तिविशेषः किंतु भंग्यंतराभिधानकृत एव व्यंग्यंतराभि

प्रदर्शितानि हि गम्यस्य स्वरूपांतरेणाभिधीनेव बहून्युदाहरणानि चक्राभिघात प्रसभाज्ञयैवेति प्राचीनोदाहरणमपि स्वरूपेण गम्यस्य भ
गवतो रूपांतरेणाभिधानसत्वात्सुयोजमेव यत्तु तत्र राहुशिरश्छेदावगमनं तत्र प्रागुक्तरीत्या प्रस्तुतांकुर एव प्रस्तुतेन च राहोः शिरोमा
त्रावशेषेणालिंगनवंध्यत्वाद्यापादानरूपेवाच्ये भगवतो रूपांतरे उपपादिते तेन भगवतः स्वरूपेणावगमने पर्यायोक्तस्य विषयः ॥
पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनं यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह अत्र नापि कांनायकेन संगमप्रवृत्तलतादर्शनव्या ईं
जेन निर्गच्छंत्या संस्मात्तत्स्वाच्छंद्यसंपादनरूपेष्टसाधनं पर्यायोक्तं यथा वा देहि मत्कंदुकं राधे परिधाननिगूहितं इति विसंसयन्नीवीं त

धानतोऽसुंदरमेव प्रायशो दृश्यते पश्चादुदाहृतं व्यमिति विवक्षितेऽगम्ये अयं देशोऽलंक रणीयः सफलतां नु पनेतव्य इत्यादावतस्तदसुंदरत्वोद्भावनमकिंचित्क
रमेव अलंकारसर्वस्वकारग्रंथविरोधोद्भावनं तु तच्छिक्षाकारिणं प्रति न शोभते उपजीव्यत्वोद्भावनमपि ग्रंथस्याकिंचित्करमेव युक्तिविरोध इति परोत्कर्षासहिष्णु
त्वमात्रमुद्भावयितुरवगमयतीत्यलं विस्तरेण प्रकारांतरेण पर्यायोक्तं लक्षयति पर्यायोक्तमिति रमणीयेन व्याजेन मिषेण स्वस्य परस्य वाऽदृष्टस्य यत्साधनं संप
दनं तदपि पर्यायोक्तं पर्यायेण व्याजरूपेण उक्तं यत्रेति निरुक्तेः संपादनेति संपादनरूपं पदिष्टं तत्साधनं तत्करणमित्यर्थः देहीति परिधानेन अधरवस्त्रेण निगू

[illegible]

एवं च प्रकारद्वयसाधारणं तदन्यतरत्वं सामान्यलक्षणे बोध्यं इत्यलंकारचंद्रिकायां पर्यायोक्तप्रकरणम् उक्तिरिति अत्र निंदास्तुतिभ्यामिति स्तुतिनिंदयोरिति चेतरे
तरयोगो न विवक्षितः तथा च निंदया स्तुतेः स्तुत्या च निंदायाः स्तुत्या स्तुतेश्चोक्तिरभिव्यक्तिर्व्याजस्तुतिरित्यर्थः प्रथमे व्याजेन स्तुतिरिति चरमयोर्व्याजरूपा स्तु
तिरिति च व्युत्पत्तेः अत एव व्याजस्तुतिपदार्थानुगमाभावान्निंदया निंदाभिव्यक्तिर्व्याजनिंदाख्यमलंकारांतरमित्यग्रे वक्ष्यते एवमाद्यप्रकारद्वये स्तुतिनिंदयोः
समानविषयत्वभिन्नविषयत्वाभ्यां प्रत्येकं द्वैविध्यमिति चत्वारो भेदाः अन्त्यस्तु भिन्नविषयस्तुतिक एक एवेति पंच भेदाः लक्षणं तु व्याजनिंदाभिन्नत्वे स

कृष्णो मुदेस्तु नः पूर्वत्र परेष्टसाधनमत्र कंदुकशोधनार्थं नीवीविस्रंसनव्याजेन स्वेष्टसाधनमिति भेदः उक्तिर्व्याजस्तुतिर्निंदास्तुतिभ्यां
स्तुतिर्निंदयोः कः स्वर्धुनि विवेकस्ते पापिनो नयसे दिवं साधु दूति पुनः साधु कर्तव्यं किमतः परं यन्मदर्थे विलूनासि दंतैरपि नखैर
पि निंदया स्तुतेः स्तुत्या निंदाया वा अवगमने व्याजस्तुतिः कः स्वर्धुनीत्युदाहरणे विवेको नास्तीति निंदाव्याजेन गंगा सुकृतिवदेव म
हापातकादिकृतवतोपि स्वर्गं नयतीति व्याजरूपया निंदया तत्प्रभावातिशयस्तुतिः साधुदूतीत्युदाहरणे मदर्थे महांतं क्लेशमनुभूतव
त्यसीति व्याजरूपया स्तुत्या मदर्थं न गतासि किंतु रंतुमेव गतासि धिक्त्वां दूति कार्ये विरुद्धकारिणीमिति निंदावगम्यते यथा वा कस्ते
शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते सप्तसप्तिसमारूढा भवंति परिपंथिनः अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं देवेत्थं
जगतीतले स्मरहराभावे समुन्मीलति गंगा सागरमंबरं शशिकला नागाधिपः क्ष्मातलं सर्वज्ञत्वमधीश्वरत्वमगमत्

ति स्तुतिनिंदान्यतरपर्यवसायिस्तुतिनिंदान्यतरत्वं सर्वानुगतं बोध्यं कस्त इति नृपं प्रति कवेरुक्तिः त्वयि योद्धुमेकं सप्तिमश्वमास्थिते आरूढे सति परिपंथि
नः शत्रवः सप्ताश्वसमारूढा भवंतीत्यन्वयः सप्त सप्तयोऽश्वा अस्येति सूर्यः सप्त च ते सप्तयः अश्वास्तत्समारूढा इति द्वितीयोर्थो निंदाद्योतकः त्वया संमु
खाहताः सूर्यमंडलं भित्त्वा दिवमुपगता इति स्तुतौ पर्यवसानं ९ ॥ अर्धमिति शिवस्य देहार्धं दानवानां वैरिणा हरिणा आहृतं हरिहरात्मकस्यैकस्य विग्रह

एवं गिरिजयाप्यवशिष्टार्धमाह तेहेदेवराजन् इत्थमुक्तप्रकारेण जगतीतले स्मरहरस्याभावे समुन्मीलति प्रकाशमाने सति गंगासागरं प्रत्यगमदित्याद्यन्वयः
शेषः स्मात्तत्पातालं त्वामिति पूर्वोन्वितं वैदुष्यादीति विद्वत्तादीत्यर्थः आदिनातपः शीलादिपरिग्रहः दारिद्र्यादीत्यादिपदेन कुटुंबबाहुल्यादिप
रिग्रहः नचात्र राजवर्णनप्रस्तावे कथं स्तुतेर्व्याजरूपत्वमितिवाच्यं स्तुतिपर्यवसानविवक्षायां स्वकीयभिक्षाटनोद्धाटनस्यासंगतत्वेन स्तुतेरुक्तनिंदारू
पोपालंभपर्यवसानस्यानुभवसिद्धस्याविरुद्धत्वात् कस्त्वमिति अंगदं प्रतिकस्यचिद्राक्षसस्य प्रश्नः रामरूपस्य राज्ञो भवने लेखार्थस्य संदेशस्य वाहको

त्वां मां च भिक्षाटने अत्राद्योदाहरणे सप्तसप्तिपदात् श्लेषमूलनिंदाव्याजेन स्तुतिर्व्यज्यते द्वितीयोदाहरणे सर्वज्ञः सर्वेश्वरोसीति
राज्ञः स्तुत्या व्याजरूपया मदीयवैदुष्यादिदारिद्र्यादि सर्वं जानन्नपि बहुप्रदानेन रक्षितुं शक्तोपि मह्यं किमपि न ददासीति निंदाव्यज्य
ते सर्वमिदं निंदास्तुत्योरेकविषयत्वे उदाहरणं भिन्नविषयत्वे निंदया स्तुत्यभिव्यक्तिर्यथा कस्त्वं वानर रामराजभवने लेखार्थसंवाह
को यातः कुत्र पुरागतः सहनुमान्निर्दग्धलंकापुरः बद्धो राक्षससूनुनेति कपिभिः संताडितस्तर्जितः सव्रीडात्तपराभवो वनमृगः
कुत्रेति न ज्ञायते अत्र हनुमन्निंदया इतरवानरस्तुत्यभिव्यक्तिः स्तुत्या निंदाभिव्यक्तिर्यथा यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटू
न्मृषा नैषां गर्ववचः शृणोषि न च तान्प्रत्याशया धावसि काले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरंग कुत्र भ
वता किं नाम तप्तं तपः अत्र हरिणस्तुत्या राजसेवानिर्विण्णस्यात्मनो निंदाभिव्यज्यते अयमप्रस्तुतप्रशंसाविषय इति अलंकार

स्मीत्युत्तरं पुरा पूर्वमागतः निर्दग्धलंकापुरः सहनुमान्कुत्र यात इति पुनः पूर्वस्य प्रश्नः बद्ध इत्याद्युत्तरार्धमंगदस्योत्तरं राक्षसस्य रावणस्य सूनुना बद्ध इति
हेतोः कपिभिर्वानरैः सम्यक् ताडितस्तर्जितः सवनमृगः हनुमान्व्रीडया लज्जया आत्तः प्राप्तः पराभवो येन तादृशः कुत्र यात इति न ज्ञायत इत्यन्वयः यदि
तिहे कुरंग यद्यस्माद्धनिनां मुखं मुहुर्मुहुर्वारंवारं नेक्षसे न पश्यसि मृषा मिथ्या चाटून् प्रियशब्दान्न वदसि यदिति सर्वत्र संबध्यते एषां धनिनां गर्वयुक्तं वचनं

परं केवलं काले क्षुधासमये स्वादसि भक्षयसि निद्रापास्यागमे च निद्रां प्राप्नोषित तस्मात्कुत्र तीर्थे किं नाम तपस्त्वं तत्तद्ब्रूहीत्यन्वयः निर्विण्णस्य खिन्नस्य तेन हीत्य
स्य इति स्तुत्यादितमित्यग्रतनेनान्वयः कल्हारं जलपुष्पविशेषः तत्संबंधिनः काल्हाराः सुखयंतीति सुखाश्च ते शीतलाश्चेत्यर्थः अप्रकांडे अप्रस्तावे तथा।
चाप्रस्तुता चासौ प्रशंसा चेति स्तुत्यंतिरिति भावः न परसेविनो ऽपरसेविनः प्रशस्यते स्तूयते    मत्तद्वयेप्यसरस्वबीजं दर्शयति वस्तुतस्त्विति अभिव्यक्तिरिति।

तेन हि सारूप्यनिबंधनाप्रस्तुतप्रशंसोदाहरणानंतरं वैधर्म्येणापि दृश्यते यथा धन्याः खलु वने वाताः काल्हाराः सुखशीतलाः रम
मिंदीवरश्यामं येस्पृशंत्यनिवारिताः अत्र वाता धन्या इति अप्रस्तुतार्थादहमधन्य इति वैधर्म्यप्रस्तुतोर्थः प्रतीयत इति स्तुत्यादि
तं इयमेवाप्रस्तुतप्रशंसा न कार्यकारणनिबंधनेति दंडी यदाह अप्रस्तुतप्रशंसा स्यादप्रकांडे तु या स्तुतिः सुखं जीवंति हरिणा वनेष्व
परसेविनः अर्थैरयत्नसुलभैर्जलदर्भांकुरादिभिः सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते राजानुवर्तनक्लेशनिर्विण्णेन मनस्विने
ति वस्तुतस्त्वत्र व्याजस्तुतिरित्येव युक्तं स्तुत्या निंदाभिव्यक्तिरित्यप्रस्तुतप्रशंसा तौ वैचित्र्यविशेषसद्भावात् अन्यथाप्रसिद्धव्याजस्तु
त्युदाहरणेष्वप्यप्रस्तुताभ्यां निंदास्तुतिभ्यां प्रस्तुते स्तुतिनिंदे गम्येते इत्येतावता व्याजस्तुतिमात्रमप्रस्तुतप्रशंसा स्यात् एवं चानया
प्रक्रियया यत्रान्यगतस्तुतिविवक्षयान्यस्तुतिः क्रियते तत्रापि व्याजस्तुतिरेव अन्यस्तुतिव्याजेन तदन्यस्तुतिरित्यर्थानुगमसद्भावात्
यथा शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः तरुणि येन तवाधरपाटलं दशति बिंबफलं शुकशावकः अत्र शुकशा
वकस्तुत्या नायकाधरसौभाग्यातिशयस्तुतिः

योः प्रस्तुतप्रशंसा तौ वैचित्र्यस्य विषय आलंबनभूतौ विशेषस्तस्यान्वयः अन्यथा तत्तौ वैचित्र्येपि तदंतर्भावो
गीकारे एवं चेति अन्यगतस्तुतिनिंदाभ्यामन्यगतनिंदास्तुत्यभिव्यक्तौ व्याजस्तुतित्वसिद्धौ चेत्यर्थः प्रक्रियया प्रकारेण शिखरिणीति नायिकां प्रति नायकस्योक्तिः
हे तरुणि असौ शुकबालकः नाभवितर्के क्व नु कस्मिन् शिखरिणि पर्वते कियत्कालं चिरं किमभिधानं किं नामकं तपः ।। अकरोद्येन हेतुना तवाधरवत्पाटलं रक्तवर्णं

व्याजनिंदां लक्षयति निंदायाइति यत्रान्यनिंदयाऽन्यस्य निंदायाअभिव्यक्तिः पर्यवस्यति सा व्याजनिंदा इतरनिंदाव्याजेन निंदेति व्युत्पत्तेः विधे इति हे विधे त्वस्मत्प्रार्थ्य
पूर्वं ते तदेकमेव षिरो यः अहर त अच्छिनत्त स एवार्थात हरो निंद्य इत्यन्वयः निंदयेत्यभिव्यंग्ये स्वेनान्वितं निंदयाभिव्यंग्या विधेर्निंदा व्याजनिंदेत्यन्वयः वि
षमविपाकं दारुणपरिणामं विधिरेवेति विशेषतो गर्हणीयः निंदनीयः हे करटकाक त्वं रटरटनं कुरु यो सौ विधिः आम्रवृक्षे सरलेन सौम्येन कोकिलेन
सहवासं तवचकारेत्यन्वयः ननु केनाप्यालंकारिकेणानुक्तायाव्याजनिंदायाः कथमलंकारत्वेनांगीकरणमित्याशंक्याह प्रतिबंदीति तुल्ययुक्त्याप्रतिबंदीस्या

निंदायानिंदयाव्यक्तिर्व्याजनिंदेतिगीयते विधेसनिंघोयस्ते प्रागेकमेवाहरच्छिरः अत्रहरनिंदयाविषमविपाकं संसारं प्रवर्त्तयतोविधे
रभिव्यंग्यानिंदाव्याजनिंदा यथावा विधिरेव विशेषगर्हणीयः करटत्वं रटकस्तवापराधः सहकारतरौचकारयस्ते सहवाससरलेनको
किलेन अन्यस्तुत्याऽन्यस्तुत्यभिव्यक्तिरितिपंचमप्रकारव्याजस्तुतिप्रतिबंदीभूते यव्याजनिंदाननुयत्रान्यस्तुत्यान्यस्तुतेरन्यनिंदयान्य
निंदायाश्चप्रतीतिः तत्रव्याजस्तुतिव्याजनिंदालंकारयोरभ्युपगमेस्तुतिनिंदारूपाप्रस्तुतप्रशंसोदाहरणेष्वप्रस्तुतप्रशंसानवक्तव्या॥
तेषामपिव्याजस्तुतिव्याजनिंदाभ्यां क्रोडीकारसंभवादितिचेदुच्यते यत्राप्रस्तुतवृत्तांतात्स्तुतिनिंदारूपात्तत्सरूपः प्रस्तुतवृत्तांतः
प्रतीयते अंतश्छिद्राणिभूयांसीत्यादौ तत्रलब्धावकाशासारूप्यनिबंधनाप्रस्तुतप्रशंसा अत्रापिवर्त्तमानाननिवारयितुंशक्या अ
न्यस्तुत्याऽन्यस्तुतिरन्यनिंदयान्यनिंदेत्येवंव्याजस्तुतिव्याजनिंदेअपिसंभवतश्चेत्कामंतेअपिसंभवेतां नतस्याः परित्यागः यद्यपिवि
धिरेव विशेषगर्हणीयइतिश्लो
नीयेत्यत्यर्थः तथावस्तुतिवन्निंदायामप्यप्रस्तुतप्रशंसा तोवैचित्र्यविशेषात दनंतर्भावे व्याजस्तुतौचार्थानुगमाभावा
दनंतर्भावेपृथगलंकारतायाऔचित्यायात्तत्वात्प्राचीनैरनुक्तापिस्वीकर्त्तुमुचितेत्याशयः प्रागुक्तयोरेकः क्वतीशकुंतेष्वित्यादवहृहत्रिमेत्यनयोरप्रस्तुतप्रशंसो
दाहरणत्वासंगतिमाशंकते नन्विति क्रोडीकारः स्वविषयीकरणं अन्यत्रलब्धात्मकस्यालंकारद्वयस्य क्वचित्संकरेपिन दोषइत्याशयेनसमाधते॥ एतत्त्वइत्यादाविस्फ्ने

अप्रस्तुतप्रशंसायाः सैवाप्रस्तुतप्रशंसैव ॥ लावण्येति इमां तन्वीं तन्वता स्रजता वेधसा चेतसि कोऽर्थः कामनाविषयभूतः विनिहितः अभिसंहितः किं प्रयोजनमु
द्दिश्य निर्मितेत्यर्थः ननु नायासेनातिसुंदरतन्वीनिष्पत्तिरेव प्रयोजनं तदभावेऽपि वा लीलामात्रेण तन्निर्माणं स्यादत आह लावण्येत्यादि यतो लावण्यरूप
द्रविणस्य धनस्य व्ययो न गणितः महान् क्लेशोऽर्जितः कृतः स्वैरं चारिणो जनस्य उदासीनस्यापि हृदये चिंताज्वरो निर्मितः एषापि वराकी दीना स्वगुणानुरू
पस्य वरस्याभावाद्धतेव हता नष्टप्राया तथा च बह्वायाससाध्यत्वादनिष्टानुबंधित्वाच्च न तन्व्याः प्रयोजनत्वं नापि लीलामात्रेण तन्निर्माणं च संभवतीति भाव

चाविशेषज्ञस्य प्रभोस्तेन च विदग्धतमतया स्थापितस्य मूर्खस्य च निंदा प्रतीयत इति तत्र सारूप्यनिबंधनाऽप्रस्तुतप्रशंसाप्यस्ति ॥
तथापि सैव व्याजनिंदामूलेति प्रथमोपस्थिततया सापि तत्र दर्शिता। एवं च व्याजनिंदामूलकव्याजनिंदारूपेयमप्रस्तुतप्रशंसेति चम
त्कारातिशयः एवमेव व्याजस्तुतिमूलकव्याजस्तुतिरूपाप्यप्रस्तुतप्रशंसा दृश्यते यथा लावण्यद्रविणव्ययो न गणितः क्ले
शो महानर्जितः स्वच्छंदं चरतो जनस्य हृदये चिंताज्वरो निर्मितः एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेध
सा विनिहितस्तन्वीमिमां तन्वता अत्राप्रस्तुतायास्तरुण्याः सृष्टिनिंदाव्याजेन तन्निंदाव्याजेन च तत्सौंदर्यप्रशंसाप्रशंसनीयत्वेना
कविविवक्षितायाः स्वकवितायाः सृष्टिनिंदाव्याजेन तन्निंदाव्याजेन च शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यति अस्य श्लो
कस्य वाच्यार्थविषये यद्यपि नात्यंतसामंजस्यं नहीमे विकल्पा वीतरागस्यापि कल्पयितुं शक्याः ॥ तन्निंदाव्याजेन तरुणीनिंदाव्याजेन त

त्सौंदर्यप्रशंसा शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यतीत्यन्वयः तन्निंदाव्याजेन स्वकवितानिंदाव्याजेन कवितासौंदर्यरूपाप्रस्तुतार्थस्यात्यंत
मस्फुटत्वात्कथमस्य पद्यस्य तत्परत्वमित्याशंकामपनेतुं भूमिकामारचयति अस्येत्यादि रसाननुगुणत्वादिति वीतरागे शृंगारस्यासंभवादिति भावः न
नु शृंगारासंभवेऽपि तन्वीनिर्माणनिंदया शांतरसपरिपोषादस्यैव रसानुगुणत्वमत आह वीतरागेति नापि रागिणि इत्यनंतरं इमे विकल्पा इत्यनुषज्यते ॥

कु॰ टी॰
खं॰
५०

विवक्षितेति भक्तविनामोदयेत्यर्थः अतएव वाच्यायामसामंजस्यादेव वाच्यासंभवेपि वाच्यसामंजस्यासंभवेपि तथाच वाच्यार्थासामंजस्यमेवास्तु हे प्रस्ता स्तुतार्थोत्तानपर्यवसायतीतिभावः इत्यलंकारचंद्रिकायां व्याजनिंदाप्रकरणे आक्षेप इति स्वयमुक्तस्यार्थस्य किंचिन्निमित्तमभिसंधाय प्रतिषेध आक्षेपः सूचितेति पक्षांतरपरिग्रहस्य पूर्वपक्षप्रतिक्षेपनियतत्वादितिभावः नचात्रकैमर्थ्यरूपपंचमप्रतीपप्रभेदेनगतार्थत्वंशंकनीयं तस्यात्रप्रतिषेधप्रतिनिमित्तत्वेनाप्राधान्यात् असंदिग्धमुदाहरति साहित्येति हे कविश्रेष्ठाः साहित्यसमुद्रस्य पाणीभारतादीनामंथनादिवपरिशीलनादुत्थितं उत्पन्नं कर्णयो।

रसाननुगुणत्वात् वीतरागहृदयस्याप्येवंविधविषयेष्वप्रवृत्तेश्च नापिरागिणइतियुज्यते तदीयविकल्पेषु वराकीतिरूपणताः लिंगितस्य हतस्य मंगलोपहितस्य च वक्तुरसोऽनुचितत्वात्तुल्यरमणाभावादित्यस्यात्यंतमनुचितत्वाच्च स्वात्मनितदनुरूपतासंभावनायामपिरागित्वेह्रियमुप्रायतास्यात् ॥ तथापिविवक्षितप्रस्तुतार्थतायांन किंचिदसामंजस्यं अतएवास्यश्लोकस्याप्रस्तुतप्रशंसापरत्वमुक्तं प्राचीनैः वाच्यासंभवेप्यप्रस्तुतप्रशंसोपपत्तेरिति आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् चंद्रसंदर्शयात्मानमथवास्तिप्रियामुखं अत्रप्रार्थितस्य चंद्रदर्शनस्य प्रियामुखसत्त्वेनानर्थक्यं विचार्य अथवेत्यादिसूचितः प्रतिषेध आक्षेपः यथावा साहित्यपाथोनिधिमंथनोत्थं कर्णामृतं रक्षत हे कवींद्राः यत्तस्य दैत्या इव लुंठनाय काव्यार्थचोराः प्रगुणीभवंति गृह्णतु सर्वे यदिवायदिवापयेन्तु नास्ति क्षतिः क्वापि कवीश्वराणां रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिंधुः

रमृतमिवाह्लादकं काव्यं रक्षत पद्यस्यास्य लुंठनायं दैत्याइवकाम्यरूपस्यार्थस्य वितस्य चोराः प्रगुणीभवंति वद्धलीभवंतीत्यन्वयः गृह्णंत्विति पदद्वयस्यार्थवेत्वनेन समानार्थत्वं लुप्तेषु अपहृतेषु सोल्लिखितेति स्वयमुद्भावितस्यर्थः वैचित्र्याणां अर्थवैचित्र्याणां अर्थांतरपर्यवसितः अर्थांतरप्रतियोगिकत्वेनावस्थितः विशेषव्यंग्यार्थविरोधं संघटनेति संयोजनकाले उचितं पक्षेतवव्यवचनंमिथ्यावचनं तस्यपरिहारस्तेनोपलक्षितेनयथार्थवादित्वेइत्यर्थः नाहंदूतीत्यत्र हि दूतीपदेन

न यथार्थवादित्वं तथापि तदुपलक्ष्यत्वात्तत्पर्यवसानोक्तिः ९ नरेन्द्रेति संधिकरणार्थमागतानां दूतानामुक्तिः नरेन्द्राणां राज्ञां मौलिः श्रेष्ठः संधीति संधिकाले उचितं यत्कैतववचनं तस्य परिहारेणोपलक्षिते इति पूर्ववदर्थः अत्राहुः संदेशहारिषु तन्निषेधस्य बाधात् संदेशहारिपदेन कैतववचनप्रयोक्तृत्वविशिष्टत्वस्य ते तन्निषेधेन च सत्यवादित्वरूपो विशेषोऽभ्युपगत इत्ययमेव निषेधेन विशेषाक्षेपो न तु सर्वं जगतीपालकस्येत्यादिर्विशेषो निषेधेन केवलेनाक्षेप्तुं शक्यते तस्य जगत्कुटुंबिन इत्युत्तरार्धगम्यत्वात् एवं स्थिते कथमुच्यते तव न कश्चिदपीत्यादीति तत्रोच्यते न वयमिति निषेधाभावे केवलादुत्तरार्धान्नोक्तविशेषावगतिः स्यात् संधि

अत्र प्रथमश्लोकेन प्रार्थितस्य कामार्थचौरेभ्यो रक्षणस्य स्वोल्लिखितत्वे विश्वाणां समुद्रगतरत्नजातवदक्षयत्वं विचिंत्य प्रतिषेध आक्षेपः निषेधाभासमाक्षेपं बुधाः केचन मन्वते नाहं दूतीति तनोस्तापस्तस्याः कालानलोपमः केचिदलंकारसर्वस्वकारादय इत्थमाहुः न निषेधमात्रमाक्षेपः किंतु यो निषेधो बाधितः सन् अर्थांतरपर्यवसितः किंचिद्विशेषमाक्षिपति स आक्षेपः यथा दूत्या उक्तौ नाहं दूतीति निषेधो बाधितत्वादाभासरूपः संघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमेवागत्य नायिको ज्जीवनीयेति विशेषमाक्षिपति ९ यथा वा नरेंद्रमौले न वयं राजसंदेशहारिणः जगत्कुटुंबिनस्तेयन शत्रुः कश्चिदीक्ष्यते अत्र संदेशहारिणामुक्तौ न वयं संदेशहारिण इति निषेधोऽनुपपन्नः संधिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन् सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः किंतु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया इति विशेषमाक्षिपति ॥

कालोचितकैतववचनत्वेनैव संभाव्यमानत्वात् अपि तु तत्कालीनसंध्यभिप्रायमात्रावगमः निषेधेन तु तत्परिहारपुरःसर उक्तविशेषावगम इत्यनुभवसाक्षिकमेतत् सत्यवादित्वं तूक्तविशेषव्यंजनीये द्वारभूतं न तु तदेव विशेषरूपं अचमत्कारित्वात् अत एव नाहं दूतीत्यत्र वस्तुवादित्वादिर्विशेषोऽभ्युपगत इत्यलंकारसर्वस्वकारः वस्तुवादित्वमादिद्वारभूतं यस्य तादृशो विशेष इति तदर्थ इति एतेन नाहं दूतीति पूर्वोदाहरणमपि व्याख्यातं अस्यैव प्रभेदांतरमाह आक्षेपोऽन्य इति

कु॰ टी॰ प्रार्थनयामरणसूचनद्वारेणगर्भितःव्यंग्यत्वेनांतर्भावितःएतच्चतिरोहितद्वयस्यार्थकथनं तदेवमग्नञ्जुतिभिन्नत्वेसतिचमत्कारकारिनिषेधत्वंसामान्यलक्षणंबोध्य
चं॰ मित्यलंकारचंद्रिकायामाक्षेपालंकारप्रकरणम् ॥ ४ आभासत्वइति विरोधस्य आभासत्वे आभासतोभासमानत्वेसति विरोधाभासोनामालंकारः आभासतइत्याभासः
५९ विरोधश्चासावाभासश्चेतिव्युत्पत्तेः ईषदर्थकेनवाङाभानस्यापातरूपत्वमर्थांतरपरिहार्यत्वरूपंबोध्यते तथाचैकाधिकरण्येनप्रतीयमानयोः कार्यकारणत्वेना
गृह्यमाणयोर्धर्मयोराभासमानाःपर्यवसन्नविरोधत्वंलक्षणंद्रष्टव्यं शनिरशनिश्चतमुच्चैरित्यादावतिव्याप्तिवारणायाद्यं विशेषणं अप्यलाक्षारसासिक्तं रक्तं
तच्चरणद्वयमितिविभावनावारणायद्वितीयं पर्यवसितस्यविरोधस्यदोषत्वादपर्यवसन्नत्वंविरोधविशेषणमितिदिक् श्लेषेति हारोःनयोरस्तीत्यर्थेविरोधः

आक्षेपोन्योविधौव्यक्तेनिषेधचतिरोहिते गच्छगच्छसिचेत्कांततत्रैवस्याज्जनिर्मम अत्रगच्छेतिविधिर्व्यक्तःमागाइतिनिषेधस्ति
रोहितःकांतोद्देश्यदेशेनिजजन्मप्रार्थनयात्ममरणसंसूचनेनगर्भीकृतः यथावा नचिरंममतापायतवयात्राभविष्यति यदिया
स्यसियातव्यमलमाशंकयापिते अत्रापिनचिरंममतापायेतिस्वमरणसंसूचनेनगमननिषेधोगर्भीकृतः ४ आभासत्वेविरोधस्य
विरोधाभासइष्यते विनापितन्विहारेणवक्षोजौतवहारिणौ अत्रहाररहितावपिहारिणौहृद्यावितिश्लेषमूलकोविरोधाभासःयथा
वा प्रतीपभूपैरिवकिंततोभियाविरुद्धधर्मैरपिभेतृतोज्झिता अमित्रजिन्मित्रजिदोजसायद्विचारदृक्चारदृगप्यवर्तत ॥

मनोहारिणाविस्पर्थेनतत्परिहारःप्रतीपेति तस्मान्नलात्भयेनक्तलापतिकूलनृपैरिवविरुद्धधर्मैरपिभेतृताभेदकारितात्यक्ताकिमित्युत्प्रेक्षापस्मात्सनलःअमित्राणां
शत्रूणांजयकृदपि ओजसामित्रस्यस्वजेयकृत् अथचमित्रजिदेवनमित्रजिदितिविरोधः चारदृष्टिरपिविचारेदृष्टिर्यस्यतादृशःविगतचारदृगितिचविरोधः विरो
धते विरोधसमाधानरूपोत्प्रेक्षाशिरःप्रधानंयस्यतादृशइत्यर्थःयत्तुविरोधसमाधानात्मिकयामुखस्थितयोत्प्रेक्षयाविरोधस्योत्थानमेवभग्नमितिकथमत्रविरोधालंका
रइतिकेनचित्तुमनसापिविमनसेवाभिहितं तदसारंविरोधभानमंतरेणविरुद्धधर्मैरपीत्याद्युत्प्रेक्षापाएवानुत्थानेनश्लेषमूलमाभासमानंविरोधमुपजीव्यैवविरोध

सांगोत्प्रेक्षायाअर्थांतरानुगृहीतायास्तत्प्राधान्येनपश्चादव
स्थितत्वादिति

इत्यलंकारचंद्रिकायां विरोधप्रकरणम् विभावनेति प्रसिद्धकारणाभावेपि कार्योत्पत्तिर्विभावनालंकारः विभाव्यते कारणांतरं यस्यामिति व्युत्पत्तेः कारणाभा वस्वरूपाद्य आर्ययेवेति सर्वत्र लक्षणसमन्वयो बोध्यः एतदेव तंत्रेण सकलविभावनाप्रकारसाधारणं सामान्यलक्षणमाद्यप्रकारविशेषलक्षणं च बोध्यं तत्रा घं दर्शितमेव द्वितीयं तु कारणान्विताभावकथनपूर्वकं कार्योत्पत्तिकथनमित्युदाहरणविशेषबलादेव गम्यत इति विविच्य न दर्शितं प्रतिबंधके सति कार्योत्पत्ति रूपे तृतीयप्रकारे ऽतिव्याप्तेर्वारणाय अन्वितेति तत्र प्रतिबंधकस्य वस्तुतः कारणाभावरूपस्य कथनेपि न कारणान्वितत्वेन कथनमिति तन्निरासः प्रकारप

अत्र विरोधसमाधानोत्प्रेक्षा शिरस्को विरोधाभास इति पूर्वस्माद्भेदः विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ॥ ७ ॥ अप्यला क्षारसासिक्तं रक्तं त्वच्चरणद्वयं अत्र लाक्षारसासेकरूपकारणाभावेपि रक्तिमा कथितः स्वाभाविकत्वेन विरोधपरिहारः यथा वा अपीतक्षीवकादंबमसंमृष्टामलांबरं अप्रसादितसूक्ष्मांबु जगदासीन्मनोरमं अत्र पानादिप्रसिद्धहेत्वभावेपि क्षीवत्वादि निबद्धं विभाव्यमानशरत्समयहेतुकत्वेन विरोधपरिहारः यथा वा वरतनुकवरीविधायिना सुरभिनखेन नरेंद्रपाणिना अ वचितकुसुमापि वल्लरी समजनि वृत निलीनषट्पदा अत्र वल्लर्यां पुष्पाभावेपि भृंगालिंगनं निबद्धं तत्र वरतनुकवरीसंक्रांतसौर भनरपतिनखसंसर्गरूपं हेत्वंतरं विशेषणमुखेन दर्शितमिति विरोधपरिहारः हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता अस्त्रैर तीक्ष्णकठिनैर्जगज्जयति मन्मथः अत्र जगज्जयसाध्यहेतूनामस्त्राणामसमग्रत्वतीक्ष्णत्वादिगुणवैकल्यं यथा वा उद्यानमारु

वकेपि कारणान्विताभावस्यार्थतो गम्यत्वात्कथनेति अप्यलाक्षेति लाक्षारसेन आसमंतात्सिक्तं लाक्षारसासिक्तं पश्चान्नञ्समासः तस्याः कामिन्याः अपीतेति अपीताः पानशून्याः क्षीवा मत्ताः कादंबाः कलहंसा यत्र तथा असंमृष्टं संमार्जनशून्यममलमंबरमाकाशं यत्र एवमप्रसादितं वस्त्रगालनकतकक्षोदप्रक्षेपादि नाऽनुत्पादितं तद्वदच्छं सूक्ष्मं लघ्वंबु यत्रैवंभूतं जगन्मनोहरमासीदित्यन्वयः परमार्थतस्तु शुद्धं दृष्टिरित्येव काव्यादर्शेऽदृष्टः पाठः विभाव्यमानेति वर्ण्यमानेस ६

वरेति करतनोः केशपाशरचनासंपादकेन अतएव सुरभिनखेन राज्ञो हस्तेन अवचितकुसुमा लूनपुष्पा विलतावृत्तासाऽभ्रमरा संजातेत्यर्थः हेतूनामिति अम
मग्रत्वे हेतुतावच्छेदकस्य धर्मस्य तत्संबंधस्य वा वैकल्ये सति अस्त्रैरिति धर्मवैकल्योदाहरणं संबंधवैकल्ये उदाहरति उद्यानेति विलोचने कर्मभूते उदस्र
यंति उद्गताश्रूणि कुर्वंतीत्यर्थः क्रियतिधात्वर्थत्वाभिप्रायं स्पर्शनस्य संयोगरूपत्वात् ॥ इमां द्वितीयप्रकाररूपां विभावनाम्याजहारेति गुणजातिक्रि
यादीनां यत्र वैकल्यदर्शनं विशेषदर्शनापेक्षया सा विशेषोक्तिरिष्यत इति ग्रंथेनाव्यवहृतवानित्यर्थः एतेन प्रथमप्रकारात् द्वितीयप्रकारस्य वैलक्षण्यं दुरुपपा

उदस्रयंति पांथानामस्पृशंतो विलोचने अत्र बाष्पोद्गमनहेतूनामसमग्रत्वस्पर्शनक्रियावैकल्यं ॥ इमां विशेषोक्तिरिति दंडी
माजहार यतस्तत्र प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपो द्वितीयोदाहरणे चंपकरेणूनामुद्दीपकतातिशयरूपश्च विशे
षः ख्याप्यत इति अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभावरूपमिति विभावना प्रदर्शिता कार्योत्पत्तिस्तृतीया
स्यात्सत्यपि प्रतिबंधके नरेंद्रानेव ते राजन्दशत्यसिभुजंगमः अत्र नरेंद्रा विषवैद्याः सर्पदंशप्रतिबंधकमंत्रौषधिशालिनः श्लेषे
णगृहीता इति सत्येव प्रतिबंधके कार्योत्पत्तिः यथा वा चित्रं तपति राजेंद्र प्रतापतपनस्तव अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणं
अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना शंखाद्वीणानिनादोयमुदेति महदद्भुतं अत्र शंखत्वेन कमनीयः कामिनीकंठस्तंत्री
निनादत्वेन तद्गीतं चाध्यवसीयत इत्यकारणात्कार्यजन्म यथा वा तिलपुष्पात्समायाति चापुष्पंदनसौरभः इंदीवरयुगाच्चित्रं निः

रमिति वदन्नपास्तः वैलक्षण्याभावे हि प्राचामलंकारांतरत्वेन कथनमसंगतानुपपन्नमेव स्यात् अस्ति च स्वरूपतः कारणाभावकथनात्कारणगतधर्मवैकल्य
द्वारेण तद्विशिष्टकारणाभावकथने सत्त्वप्रसिद्धौ विच्छित्तिविशेषः प्रकारांतरास्वीकारे लाघवमिति तु स्वीयलाघवोद्भावनमिति कृतमधिकेन कार्योत्पत्तिरिति
प्रतिबंधके सत्युत्पत्तिकथनं तृतीया विभावना नरेंद्रानिति नरेंद्रो वार्तिके राज्ञि विषवैद्ये पि कथ्यत इति विश्वः असि ः खड्ग एव भुजंगमः चित्रमिति प्रताप एव तपनः

स्यातपत्रेण सहितं सातपत्रं उदित इति कस्यचिद्राजकुमारस्य प्रतापवर्णनं कुमाररूपे सूर्ये उदिते सति कोः पृथिव्या वलयं मंडलमेव कुवलयं कुमुदं मुद्वासं प्रा
प्नोति क्षत्रं क्षत्रियकुलं न भाति अथ च नक्षत्रं भातीति चित्रं तथा परेषां राजकुमाराणां पाणिकमलानि मुकुलीभवंति संकुचंति अंजलिं बधातदाकृतीनिभवं
तीत्यर्थः ५ अविवेकीति विवेको विशेषदर्शनं विश्लेषश्च तच्छून्यं परस्परसंश्लिष्टत्वात् कुचयुगं कर्तृ जगत्त्रयं हेतुना मम श्रुतिर्वेदः कर्णश्च प्रणयः परिचयः
यशाद् इति का एवदातृत्वात्कल्पतरुः अत्र पयोधिजन्मा कल्पतरोः कारणस्य पयोधेरुत्पत्तिः षष्ठी विभावना जातेति जातु कदाचित् कनकलतेव कनकलता कामि

विरुद्धात्कार्यसंपत्ति दृष्टा काचिद्विभावना शीतांशुकिरणास्तन्वीं हंत संतापयंति तां अत्र तापनिवर्त्तकतया तापविरुद्धैरिंदुकिरणै
स्तापजनिरुक्ता यथा वा उदिते कुमारसूर्ये कुवलयमुल्लसति भाति न क्षत्रं मुकुलीभवंति चित्रं परराजकुमारपाणिपद्मानि ५॥
यथा वा अविवेकि कुचद्वंद्वं हंतु नाम जगत्त्रयं श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणं पूर्वोदाहरणयोः कारणस्य कार्यविरोधित्वं
स्वाभाविकं इह तु श्रुतिप्रणयित्वरूपागंतुकगुणप्रयुक्तमिति भेदः कार्यात्कारजन्मापि दृष्टा काचिद्विभावना यशः पयोराशिरभूत्क
रकल्पतरोस्तव यथा वा जाता लता हि शैले जातु लतायां न जायते शैलः संप्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातं कार्याजनि
र्विशेषोक्तिः सति पुष्कलकारणे हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि यथा वा अनुरागवती संध्या दिवसस्तत्पुरःसरः अहो
दैवगतिश्चित्रा तथापि न समागमः असंभवार्यनिष्पत्तेरसंभाव्यत्ववर्णनं को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥ ५ ॥

नी गिरिद्वयमिव स्तनद्वयं इत्यलंकारचंद्रिकायां विभावनाप्रकरणं विशेषोक्तिं लक्षयति कार्याजनिरिति पुष्कले सहकारिसंपन्ने कारणे सति प्रसिद्धकार
णसमूहे सतीति यावत्कार्यस्याजनिरनुत्पत्तिर्विशेषोक्तिः विशेषस्य अनुत्पत्तिनिमित्तस्योक्तिर्दैवगतिर्यत्रेति युक्तेः अनुरागेति अनुरागो रक्तिमा रतिश्च प
रः सरोऽग्रवर्ती आज्ञाकरश्च पूर्वोदाहरणे त्वनुक्तनिमित्ता इह दैवगतिवैचित्र्यस्य निमित्तस्योपादानादुक्तनिमित्तेति भेदः इति विशेषोक्तिप्रकरणम् असंभव इति ॥

कस्यचित्सदार्थस्यनिष्पत्तेरसंभावनीयत्ववर्णनमसंभवो नामालंकारः गोपशिशुकः गोपालबालकः निंदायांस्वार्थेवाकप्रत्ययः उद्धरेत् अयमिति वारांजलानां
निलयः स्थानं तृष्णापिपासा अर्थाभिलाषश्चतरलितं चंचलीकृतं श्रितः आश्रितः मुनिरगस्त्यः एनंसमुद्रंक्षणात् आसमंतात्पास्यतिइदंकोजानीतइत्यन्व
यः कीदृशंनिजकरपुटीकासंपुटमेवकोटरंविलंतद्गतं तथाताम्यंतोग्लायंतस्तिमयोमत्स्यामकराश्चयस्यैवंभूतमित्यर्थः इत्यसंभवालंकारप्रकरणं ॥ विरु
द्धमिति १ अदृष्टमित्यर्थः भिन्नदेशत्वं भिन्नाधिकरणत्वं विषजलं हालाहलं च संगतस्वभावः सांगत्यंतदभावो संगतं अजस्रमिति दमयंतीप्रतिहंसोक्तिः

अयंवाममेकोनिलयइतिरत्नाकरइति श्रितोस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः कएवंजानीतेनिजकरपुटीकोटरगतं
क्षणादेनंताम्यत्तिमिमकरमापास्यतिमुनिः ॥ विरुद्धंभिन्नदेशत्वंकार्यहेत्वोरसंगतिः विषंजलधरैः पीतंमूर्छिताः पथिकां
गनाः ययोः कार्यहेत्वोर्भिन्नदेशत्वंविरुद्धतयोस्तन्निवध्यमानमसंगत्यलंकारः यथात्रविषपानमूर्छयोर्भिन्नदेशत्वं यथावा
अहोखलभुजंगस्यविचित्रोयंवधक्रमः अन्यस्यदशतिश्रोत्रमन्यःप्राणैर्वियुज्यते क्वचिदसंगतिसमाधाननिवंधनेनचारु
तातिप्रायः यथावा अजस्रमारोहसिदूरदीर्घासंकल्पसोपानततिंतदीयां श्वासान्सवर्षत्यधिकंपुनर्यध्यानात्तवत्वन्मयता
मवाप्यविरुद्धमितिविशेषणाद्यत्रकार्यहेत्वोर्भिन्नदेशत्वेनविरुद्धंतत्रनासंगतिः यथा भ्रूचापवल्लींसुमुखीयावन्नयतिव
क्रतां तावत्कटाक्षविशिखैर्भिद्यतेहृदयंमम अन्यत्रकरणीयस्यततोन्यत्रकृतिश्चसा अन्यत्कर्तुंप्रवृत्तस्यतद्विरुद्धकृतिस्तथा

हृदमयंतित्वं तदीयानलसंवंधिनीदूरमत्यंतदीर्घासंकल्पोमनोरथस्तद्रूपसोपानपरंपरांअजस्रंनिरंतरमारोहसि सपुनर्नलः अधिकंश्वासान्वर्षति
मुंचतीतियत्तत्तवध्यानात्तन्मयतांतत्स्वरूपतामवाप्येत्यन्वयः अत्रचतुर्थपादेनासंगतिसमाधानं भ्रूचापेति भ्रूचापवल्लींभ्रूस्वरूपधनुर्लतां यावदिति
परिमाणार्थंवक्रतांनयति आकर्षतीतियावत् तावत्परिमाणंहृदयंभिद्यतइत्यर्थः अत्रहृदयभेदधनुराकर्षणयोःकार्यकारणयोर्भिन्नदेशत्वमेवदृष्टमि
ति समासोक्तिः

त्यक्तेति अन्यत्रकर्तव्यस्यवस्तुनस्ततोन्यस्मिन्नधिकरणेयाकृतिः करणंतदपिअसंगतिरित्यनुषज्यते तया अन्यत्कार्यंकर्तुंप्रवृत्तस्यतद्विरुद्धकार्यकरणात्तृतीया अ
संगतिः अपगतंपारिजातंयस्यांसातांस्वर्गं तयापारिजाततरुरहितां अकृथाः कृतवान् एवंगोत्रायाः पृथिव्याउद्धारायपुरावराहावतारेप्रवृत्तोपित्वंगोत्रा
णांपर्वतानामुद्भेददलनमकरोः कृतवानित्यर्थः श्लेषोत्थापिता श्लेषमूलकाभेदाध्यवसायोत्थापितायथावेत्ति हेभुवनकवीरचोलदेशाधिपसिंहसदृश
तवखड्गेनखंडितायेसपत्नाः शत्रवस्तद्विलासिनीनामभिनवा अदृष्टपूर्वाभूषा भूषणानिभवंति यथानेत्रेषुकंकणंजलकणमेवकंकणंवलय भवती
त्यनुषंगः अयेतिसमुच्चये ऊरुषुचपत्रयुक्तावल्लीसैवपत्रिकास्वना करपल्लवेषुतिलपुलकं जलमेवललाटभूषणमितिमोहमिति हेअखिलेश्व

अपारिजातांवसुधांचिकीर्षयांतथाकृथाः गोत्रोद्धारप्रवृत्तोपिगोत्रोद्भेदं पुराकरोः अत्रकृष्णंप्रतिशाक्रस्यसोपालंभवचनेभुविवि
कीर्षितंतयातत्रकरणीयंअपारिजातत्वंदिविकृतमित्येकाऽसंगतिः पुरागोत्रायाउद्धारप्रवृत्तेनवराहरूपिणातद्विरुद्धंगोत्राणां
दलनंखुरकुट्टनैः कृतमितिद्विविधापिश्लेषोत्थापिता ॥ यथावा त्वत्खड्गखंडितसपत्नविलासिनीनांभूषाभवत्यभिनवाभुव
नैकवीरनेत्रेषुकंकणमयारुषुपत्रवल्लीचोलेंद्रसिंहतिलकं करपल्लवेषु मोहंजगत्त्रयभुवामपनेतुमेतदादायरूपमखिलेश्वर
देहभाजां निःसीमकान्तिरसनीरधिनामुनैवमोहंप्रवर्द्धयसिमुग्धविलासिनीनां अत्राद्योदाहरणेकंकणादीनामन्यत्रकर्तव्यत्वप्र
समादायमर्यादातिक्रांतकांतिरूपरससमुद्रेणामुनैवरूपेण सिद्धमितितेनोपन्यस्तं ॥
रजगत्त्रयवर्तिनांदेहधारिणांमोहमपनेतुंएततस्वरूपेक्षण्याशरीरमादायमर्यादातिक्रांतकांतिरूपरससमुद्रेणामुनैवरूपेण भवतीनाभवत्यर्थेनभवनेनेतियावत् भा
सुंदरस्त्रीणांमोहंप्रवर्द्धयसीपन्वयः अत्रेति अनयोर्मध्यइत्यर्थः आद्योदाहरणेद्युतिलक्षण्यानुगतिरित्यन्वयः भवतिनाभवत्यर्थेनभवनेनेतियावत् भा
वनारूपा भवनप्रयोजकव्यापाररूपायत्तु अन्यत्रकरणीयस्येत्याद्यसंगतिप्रकारद्वयांतरकथनमयुक्तं अपारिजातामित्युदाहरणेपारिजातराहित्यविको
र्षारूपकारणस्याकार्येणपारिजातराहित्येनवैयधिकरण्येपर्यवसानेनप्राथमिकासंगतितोवैलक्षण्यानुपपत्तेः आलंबनात्म्यविषयतासंबंधेनचिकीर्षायाः

सामानाधिकरण्येन कार्यमात्रं प्रतिहेतुत्वात् एवंनेत्रेषुकं कणमित्यादौ कंकणत्वनेत्रालंकारत्वयोर्विरुद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितं ए
वं गोत्रोद्धारप्रवृत्तोपीत्युदाहरणे विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावनेत्युक्तविभावनाप्रकारेणैव गतार्थत्वादसंगतिभेदांतरकल्पनानुचिता मोहमित्या
दावपि मोहनीवर्तकत्वमोहजनकत्वयोर्विरुद्धयोरेकत्र वर्णनाद्विरोधाभास एवेति केचिदुक्तं तदसंगतं उक्तसंबंधेन चिकीर्षाया हेतुत्वासिद्धेः नहि य
दधिकरणे कार्यचिकीर्षा तदधिकरण मंतर्भाव्योक्तसंबंधेन चिकीर्षायाः कार्यहेतुत्वं तांत्रिकसंमतं युक्तं वा अन्यत्र चिकीर्षितस्यापि प्रमादादिनान्यत्र
करणेन व्यभिचारात् अत एवैवंविधेष्वपि वैयधिकरण्यस्य विरुद्धत्वादपि न प्राथमिकासंगत्यंतर्भावसंभवः वस्तुतस्तु विषजलधरैः पीतमूर्छिताः पथिकाः

भवति नाभावनारूपा अन्यत्रकृतिराक्षिप्यतद्वृतिलक्षणानुगतिः विषमं वर्ण्यते पत्रघटनानन्रूपयोः केयं शिरीषमृद्वंगी क्वता
वन्मदनज्वरः अत्रातिमृदुत्वेनातिदुःसहत्वेन चाननुरूपयोरंगनामदनुज्वरयोर्घटना यथा वा अभिलषसि यदींदो वक्त्रलक्ष्मीं
मृगाक्ष्याः पुनरपि सकृदब्धौ मज्ज संक्षालयांकं सुविमलमथ बिंबं पारिजातप्रसूनैः सुरभय वदनो चेत्वं क्कतस्यामुखं क्क पूर्वत्रवस्तु
सतीघटनाऽत्र च चंद्रवदनलक्ष्म्योस्त किंनाघटनेति भेदः विरूपकार्यस्योत्पत्तिरपरं विषमं मतं कीर्तिप्रसूते धवलां श्यामा तव

गनात्पत्रे वनात्र कार्यकारणवैयधिकरण्यप्रयुक्तो विच्छित्तिविशेषोऽपि त्वन्यत्रकर्तव्यस्यान्यत्रकरणप्रयुक्त एवेति स्वहृदयमेव प्रष्टव्यं एवंनेत्रेषुकं कणमित्य
त्रासत्यपि विरोधाभासेऽन्यत्रचमत्कारित्वेन ह्यमालंकारभावोऽन्यत्रकर्तव्यस्यान्यत्रकरणरूपाऽसंगतिरपि प्रतीयमानानआशंक्यानिराकर्तुं एवंगोत्रोद्धार प्रवृ
त्तोपीत्युदाहरणे गोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्ये विरुद्धत्वाद्विरुद्धात्कार्यसंपत्तिरपि विभावनेत्यपि न युक्तं गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्तक
त्वाभावेन तद्विरुद्धत्वाभावात् कथंचित्तदभ्युपगमेऽपि अन्यत्कार्यं कर्तुं प्रवृत्तेन ततन्तद्विरुद्धकार्यांतरकरणरूपाऽसंगतिरपि मोहजगत्त्रयभुवामित्यादौ वमत्
कारित्वेन लब्धात्मिका न निवारयितुं शक्यते न चात्रापि मोहनिवर्तकान्मोहोत्पत्तेः सैव विभावनेति वाच्यं मोहनिवर्तकस्य सिद्धवदप्रतीतेः ॥

अत एव न विरोधाभासेपि विच्छेपोक्तिकथनं तत्रासंगतमेव नहि गोत्रोद्धारविषयकप्रवृत्तिरूपकारणसत्वेपि गोत्रोद्धाररूपस्य कार्यस्यानुत्पत्तिरिह प्रतिपा

द्यते किंतु विरुद्धकार्योत्पत्तिरेवेति विभावनीयम् इत्यसंगतिप्रकरणम् विषममिति परस्परमानुरूप्यरहितयोः पदार्थयोर्यत्र घटनासंबंधो वर्ण्यते

तत्र विषमं नामालंकारः संबंधश्च संयोगादिः उत्पाद्योत्पादकभावश्चेति सर्वप्रकारसाधारणमेतल्लक्षणं बोध्यं अभिलषसीति अंकं कलंकं संक्षा

लय प्रक्षालय अथ प्रक्षालनानंतरं नो चेत्तस्या मुखं कलंककइतिवदेत्यन्वयः वस्तुसती वस्तुगत्या विद्यमाना चंद्रेति चंद्रश्च वदनलक्ष्मीश्च तयो

रित्यर्थः विरूपकार्यस्येति कारणविलक्षणस्वरूपस्येत्यर्थः कृपाणिका खड्गः प्रक्रमेणेति प्रक्रमः परिपाटी स्वसजातीयकार्यगुणोत्पादकत्वरूपा वि

विलक्षणगुणाशा

अत्र कारणगुणप्रक्रमेण विरुद्धा त्स्वच्छामाद्धवलोत्पत्तिः कार्यकारणयोर्निवर्त्यनिवर्तकत्वे पंचमी विभावना

लित्वेत्ययं विषम इति भेदः ॥ अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् भक्ष्याशयाहिमंजूषां दृष्ट्वाखुस्तेन भक्षितः इष्टार्थ

मुद्दिश्य किंचित्कर्मारभ्यवतो न केवलमिष्टस्यानवाप्तिः किंतु ततोऽनिष्टस्यापि प्रतिलंभश्चेत्तदपि विषमो यथा भक्ष्यप्रेप्सया सर्पपे

टिकां दृष्ट्वा प्रविष्टस्य मूषकस्य न केवलं भक्ष्यालाभः किंतु स्वरूपहानिरपीति यथा वा गोपाल इति कृष्ण त्वं प्रचुरक्षीरवां

छया श्रितो मातृस्तनक्षीरमप्यलभ्यं त्वयाकृत इदमर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्त्यावनिष्टप्रतिलंभे वोदाहरणं ॥

तृतीयप्रकारमाह ॥ अनिष्टस्यापीति अपि भि

न्नकार्यसंपत्तिरिति पंचमविभावनाप्रकारेणाभेदमाशंक्याह कार्येति अयं विषमः उक्तविषमालंकारप्रभेदः

न्नक्रमः इष्टार्थसमुद्यमात् अनिष्टस्यावाप्तिरपि चेत्तत् विषममित्यर्थः अपिनाद् इष्टानवाप्तिः संगृह्यते चकारः पूर्वोक्तविषमसमुच्चयार्थः भक्ष्येति अ

हिमंजूषा सर्पपेटिका दृष्ट्वा भक्ष्यस्याशयाप्रविष्ट आखुर्मूषकस्तेन भक्षित इत्यन्वयः यस्तु प्रविष्ट इत्यस्यागम्यमानत्वान्न्यूनपदत्वमिति केनचिदुक्तं तदा

भिनिवेशादुपेक्ष्यम् इदं यानुभवविकत्थनमित्युपेक्षणीयं अनिष्टस्यापि प्रतिलंभ इत्यत्राप्यपि भिन्नक्रमो बोध्यः गोपाल इति हे कृष्ण त्वं गोपाल इति हेतो

त्वयातु मातृस्तनदुग्धमप्यलभ्यंकृतं मुक्तिदानेनेतिभावः पूर्वत्रेष्टानवाप्तिरर्थगम्या इहत्वपिशब्दगम्येतिशेषः इदमितिउदाहरणमितिच जातावेकवच
नं दिवीतिभुविसैंहिकेयस्यसिंहीपुत्रस्यसिंहस्यभयात् दिविस्थाकाशेचंद्रमाश्रितवतः शशस्यमाश्रयस्याश्रयसहितस्यततः सैंहिकेयाद्राहोर्भयमे
नत हेतन्वंगिपद्येत्यन्वयः परेतिपरस्यानिष्टावाप्तिरूपोयइष्टार्थइत्यर्थः तदुभयंइष्टानवाप्त्यनिष्टावाप्तिद्वयंदिघक्षन्नितिदशाननोरावणः मारुते
हंनुमन्तोवालंपुच्छंदग्धुमिच्छंतंवालमादोप्यदीपयतिस्मेत्यर्थः प्रत्येकमपीति अपिनाइष्टानवाप्तिसमुच्चितायाअनिष्टावाप्तेर्विषमपदेनान्वयः स

अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात्तदुभयंयथा दिविश्रितवतश्चंद्रंसैंहिकेयभयाद्विशशस्यपश्यतन्वंगिसाश्रयस्यततो
भयं अत्रनेकेवलंशशस्यस्वानर्थपरिहारानवाप्तिः किंतुसाश्रयस्याप्यनर्थावाप्तिरितिदर्शितं परानिष्टप्रापणरूपेष्टार्थसमु
द्यमात्तदुभयंयथादिधक्षन्मारुतेर्वालंतमादीप्यद्दशाननः आत्मीयस्यपुरस्यैवसद्योदहनमन्वभूत् पुरस्यैवेत्येवकारेणपरानि
ष्टप्रापणाभावोदर्शितः ॥ ४ ॥ अनिष्टस्याप्यवाप्तिश्चेतिश्लोकेऽनिष्टावाप्तेरपिशब्दसंगृहीतायाइष्टानवाप्तेश्चप्रत्येकमपि
विषमपदेनान्वयः ततश्चकेवलानिष्टप्रतिलंभःकेवलेष्टानवाप्तिश्चेत्यन्यदपिविषमद्वयंलक्षितंभवति तत्रकेवलानिष्टप्रतिलं
भोयथा ५ पद्मातपत्ररसिकेसरसीरुहस्यकिंबीजमर्पयितुमिच्छसिवापिकायां कालःकलिर्जगदिदंनकृतज्ञमज्ञेस्थित्वाहरि
ष्यतिमुखस्यतवैवलक्ष्मीं ॥

मुच्चीयतेविषमपदेनविषमपरामर्शकेनतत्पदेन तथाचतात्पर्यवलाद्वाक्यमावर्तनीयमितिभावः यत्वनिष्टस्येवत
दुत्तरापिशब्दसमुच्चितायाइष्टानवाप्तेरप्याप्नोतिनैवान्वयोनतुतत्पदपरामृष्टेनविषमेण अभ्युपयतेरितितत्यागेवापिशब्दान्वयव्याख्यानेननिरस्तंवेदितव्य
५ पद्मेति दयितांप्रतिनायकोक्तिः पद्मस्यातपत्रंछत्रंतत्ररसिकेहेतन्विवापिकायांसरसीरुहस्यपद्मस्यकंदमर्पयितुंकिमितीच्छसि यतः हे अज्ञेकलियुगरूप
कालःइदंजगत्कृतज्ञंवनभवति ततः किंनत्राहइदंसरसीरुहंस्थित्वातवैवमुखस्यलक्ष्मींहरिष्यतिनत्वन्यस्याइत्यर्थः खिन्नोसीति विभ्रमः धारयोमःवदन्तु

भरेण शैलभारेण भुग्नावक्राः विततावि स्तीर्णा वाहवो येषां तथाभूतेषु सत्सु हसन् अत्रेति नवभरभुग्नेत्यनेन वाहुगतास्थिसंधिभंगरूपानिष्टप्राप्तेः साक्षा
दुपात्तत्वात्सर्वांगचूर्णीभावगर्वापहाररूपायाश्चस्फुटंगम्यमानत्वात्कथमिष्टाप्राप्तिगोत्रमित्युच्यत इति वाच्यं अस्थिसंधिभंगस्याशब्दार्थत्वात् भगवद्भुज
शैथिल्याप्रयुक्तभाराधिक्येन वक्रतायात्रस्यशब्दोपात्तस्य चक्रेशविशेषानाधायकत्वेनानिष्टस्यपदेशानर्हत्वात् सुहृद्भूतानां गोपानां मनिष्टप्राप्तौ हास्या
नुपपत्तेश्च अत एव न सर्वांगचूर्णीभावोपिगम्यः गर्वप्रसक्त्यभावाच्च नतदपहारोपि यतश्चिरकालशैलधारणजन्यश्रमपरिजिहीर्षया गोपानां प्रवृत्तिरि

अत्र पद्मानपत्रलिप्सया पद्मबीजावापः कृतवत्यास्तल्लाभोऽस्त्येव किंतु मुखशोभाहरणरूपोत्कटानिष्टप्रतिलंभः केवलेष्टानवा
प्तिर्यथा खिन्नोसि मुंच शैले विभृमो वयमिति वदत्सु शिथिलभुजः भरभुग्नविततवाहुषु गोपेषु हसन् हरिर्जयति अत्र यद्यपि शै
लस्योपरि पतनरूपानिष्टावाप्तिरपि प्रसक्ता तथापि भगवत्करांबुजसंसर्गमहिम्ना सा न जातेति शैलधारणेरूपेष्टानवाप्तिमात्रं॥
यथा वा लोके कलंकमपहातुमयं मृगांको जातो मुखं तव पुनस्तिलकच्छलेन तत्रापि कल्पयसि तन्वि कलंकरेखां नार्यः समाश्रितज
नेहि कलंकयंति अत्रानिष्टपरिहाररूपेष्टानवाप्तिः यथा वा शापोप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोयं ॥
कृष्यां दहन्नपि खलु क्षितिमिंधनेद्धो वीजप्ररोहजननीं दहनः करोति ॥ ९ ॥ अत्र परानिष्टप्रापणरूपेष्टानवाप्तिः

हे तन्वि लोके प्रसिद्धं कलंकमपहंतुं निवारयितुं मृगांकस्तव मुखं जातः तत्रापि पुनस्तिलकव्याजेन कलंकरेखां त्वं कल्प
यसीत्यवगम्यत इति निरवद्यं लोक इति लोके हि नार्यः समाश्रितजनं स्वाश्रितजनं कलंकिनं कुर्वंतीत्यन्वयः शापो पीति मृगयायां प्रमादतो हतपुत्रेण तापसेन त्वमपि पुत्रशोका
पन्नकरोषि हि यस्मात्त्वमपि खलु निश्चितं दुःख
नम्रियस्यसीति शापे दत्ते तं प्रति दशरथस्योक्तिः अदृष्टपुत्रमुखपंकजशोभे मयि भगवता त्वया पातितः अयं शापोपि सानुग्रहो भवति खलु निश्चितं दुःख
नैरिद्धो दीप्तो दहनः कृषियोग्यां क्षितिं दहन्नपि वीजांकुरजननीं करोतीति दृष्टांतः ॥ ९ ॥ परेति परस्य दशरथस्यानिष्टप्रापणरूपं यदिष्टं तस्यानवाप्तिरर्थात्

यमनीतिमोक्त्वंमूढत्वं एवंविधायामामतत्वबुद्धेः विधेर्दैवस्य विपाकं परिपाकंफलमिति यावत् भानुरिति हे हरे भानुः सूर्यः भवच्चरणकिरणशोभायाल्लोभात्त्वीय।
किरणसमूहं निशासुप्रभातपर्यंतप्रताप्य रात्रौसूर्यकिरणानामग्नौप्रवेशात्तापयित्वात्तत्रतस्मिन्किरणो ल्करेहुतवहादग्नेः सकाशादुद्भूते सतिर
कृतादर्शनात् मंदसंतापः सन्क्षणमात्रेणलुप्तरागेनष्टलौहित्येसत्यनुदिनंतापंभजतीत्यन्वयः त्वद्वक्त्रेति हे हरे अयंविधुः पर्वणिपूर्णिमायांअंबुज
स्वतोऽनिष्टस्यापिमुनिशापस्यमहापुरुषार्थपुत्रलाभावश्यंभावगर्भतयादशरथेनेष्टत्वेनसमर्थितत्वात् यत्रकेनचित्स्वेष्टसिध्य
र्थंनियुक्तेनान्येननियोक्तुरिष्टमुपेक्ष्यस्वस्यैवेष्टं साध्यतेतत्रापीष्टानवाप्तिरूपमेवविषमं यथा यंप्रतिप्रेषितादूतीतस्मिन्नेवल
यंगता सख्यः पश्य तमोऽद्भुतमेविपाकंवाविधेरमुं तस्मिन्नेवलयंगतेतिनायकेदूत्याःस्वाकूतंदर्शितं यथावा नपुंसकमिति।
ज्ञात्वाप्रियायैप्रेषितंमनः तत्तुतत्रैवरमतेहताःपाणिनिनावयं एतानिसर्वथैवेष्टानवाप्तेरुदाहरणानि कदाचिदिष्टावा
प्तिपूर्वकंतदनवाप्तिर्यथा मदीयेवरदराजस्तवे भानुर्निशासुभवदंघ्रिमयूखशोभाल्लोभात्प्रताप्यकिरणोत्करमाप्रभातं तत्रौ
द्भूतेहुतवहात्क्षणलुप्तरागेतापंभजत्यनुदिनंसहिमंदतापः यथावा त्वद्वक्त्रसाम्यमयमंबुजकोशमुद्राभंगात्ततत्सुषुममित्र
करोपक्लृप्तालभ्याऽपिपर्वणिविधुःक्रमहीयमानःशंसत्यनीत्युपचितांश्रियमाशुनाशं अत्राद्यश्लोकेसूर्यकिरणानांरात्रिष्व
ग्निप्रवेशनमागमसिद्धं सूर्यस्यनिजकिरणेषुभगवच्चरणारुणिमप्रेक्षयातत्कृतंतेषामग्नौप्रतापनंपरिकल्प्यतेषामुदयकाल

स्यकोशः कुड्मलः सएवांबुजस्यभांडारस्थानंतस्यमुद्रामुकुलीभावोमुद्रणंवातस्यभंगेनात्तागृहीतातत्सुषमातत् शोभायेनतादृशायेमित्रकराःसूर्यकिरणाः
सुदृष्टात्पाणयश्चतेषामुपक्लृप्त्यालाभेनत्वद्वक्त्रस्यकांतिलभ्यापिक्रमेणहीयमानःक्षीयमाणःसन् अनीत्याउपचितांप्रवृद्धांश्रियंआशुनाशंयस्यासंताशं
सतिकथयतीत्यन्वयः अत्रेति आगमसिद्धेतस्माद्दिवाग्निरादित्यंप्रविशतितरात्रावादित्योऽग्निमितिश्रुतिसिद्धंप्रवेशनंतत्कृतंसर्पकृतंतेषांकिरणानामग्नौप्रतापन
॥

एवंतेषांकिरणानामरुणिमाने आरक्तत्वंचस्वरुणिमानुवृत्तिरूपंपरिकल्प्यइतिदर्शितमित्यन्वयः ॰ एवमग्रेपिसुहृत्त्वेनसूर्यंपरिकल्प्य तत्किरणस्यचंद्रानुप्रवेशं
वशास्त्रसिद्धंसुहृत्त्वाणेर्ययोक्तवि शेषणविशिष्टस्यचंद्रस्यस्पर्शरूपंचपरिकल्प्यइतिदर्शितमित्यन्वयः वल्लालेतिहे एतन्नामकभूपालत्वच्छत्रुनगरेसं
चरंती भिल्लीप्रकीर्णानिरत्नान्यादायउरुतरामहतीयाखदिरांगारस्यशंकाभ्रांतिस्तयाआकुलांगीतदुपरिश्रीखंडकाष्टशकलंक्षिप्त्वामुकुलीभूतनेत्रा

दृश्यमरुणिमानंचतप्तोद्धृतनाराचानामिवाग्निसंतापनप्रयुक्तारुणिमानुवृत्तिंपरिकल्प्यसूर्यस्यमहतापिप्रयत्ने नतात्कालिके
ष्टावाप्तिरितिदर्शितं॥ ॰ द्वितीय श्लोकेचंद्रस्यभगवन्मुखलक्ष्मीं लिप्समानस्यसुहृत्त्वेनमित्रशब्दश्लेषवशात्सूर्यंपरिकल्प्य
तत्किरणस्यकमलमुकुलविकासनेचंद्रानुप्रवेशानंचसुहृत्त्वाणेर्भगवन्मुखलक्ष्मीनिधानकोशगृहमुद्रामोचनपूर्वकंततो
गृहीतभगवन्मुखलक्ष्मीकस्यतयाभगवन्मुखलक्ष्म्याचंद्रप्रसाधनार्थंचंद्रस्यस्पर्शरूपंचपरिकल्प्यैतावतापिप्रयत्नेनपौर्णमास्यामे
वभगवन्मुखसाम्यरूपेष्टप्राप्तिर्ज्ञायतेनसार्वकालिकेतिदर्शितं क्वचिदिष्टानवाप्त्यावपितदवाप्तिभ्रमनिबंधनविच्छित्तिविशे
षः यथावा वल्लालक्षोणिपालत्वदहित नगरेसंचरंतीकिराती रत्नान्यादायप्रकीर्णान्युरुतरखदिरांगारशंकाकुलांगीक्षिप्त्वा
श्रीखंडखंडंतदुपरिमुकुलीभूतनेत्राधमंतीश्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशंकांकरोति अत्रप्रभूताग्निसंपादनोद्योगात्त
त्संपादनालाभेऽपितल्लाभःभ्रमोपन्यासमुखेननिबद्धः समंस्याद्वर्णनंयत्रद्वयोरप्यनुरूपयोः स्वानुरूपंकृतंसद्महारेणकुचमंडल
प्रथमविषमप्रतिद्वंद्वीदंसमंयथावा

फूत्कारंकुर्वतीसतीश्वासपरिमलेनप्रसक्तैरागतैर्भ्रमरसमूहैर्धूमशंकांकरोतीत्यन्वयः प्रभूतेति वहुलेत्यर्थः
एतेषुचसर्वेषुप्रत्याय्योत्पादकभावरूपसंवंधगर्भेषुप्रभेदेषुकार्यकारणयोःक्वचिद्विलक्षणगुणशालित्वेनानुरूप्याभावात् क्वचिच्चेष्टोत्पादकत्वेनाभिमतस्य
कारणस्येष्टानवाप्त्यनिष्टावाप्तिरूपकार्येणानुरूप्याभावात्ताभाव्यलक्षणसमन्वयोवोध्यःइत्यलंकारचंद्रिकायांविषमालंकारः सममिति ॰ ॥

अनुरूपयोरिसनेतरसंबंधस्येतिशेषः परस्परमनुरूपयोः संबंधस्य वर्णनेसमंनामालंकारः सम्रस्यान शशिखंडमंडन चंद्रकलाभूषणहर चित्रमिति। अत्र चित्रवतशब्दयोर्वीप्साविस्मयातिशयद्योतनाय परिणते पक्के स्फीतिः समृद्धिः एतस्याः फलसमृद्धेः कवलनकलनक्षणचातुर्ये तत्र कोविदः पंडितः॥८॥ सारूप्यमपीति कार्यस्यकारणेनसारूप्यमपिसमालंकारः नीचेति नीचप्रवणतानीचासक्तता जलजायाः समुद्ररूपजलाज्जातायाः उचितेति। जलस्यतादृशत्वादितिभावः दवेतिघनतां मेघरूपतांवर्षैर्जलवर्षणैः शमयति हि यस्मात्सोपिदवदहनोपिवमेवस्वोत्पादकविनिर्दहति तथाचकार

कौमुदीवतुहिनांशुमंडलंजाह्नवीवशशिखंडमंडनं पश्यकीर्तिरनुरूपमाश्रितात्वांविभातिनरसिंहभूपते चित्रचित्रंवतवतमहच्चि। त्रमेतन्नहिचित्रंजातोदैवादुचितघटनासंविधाताविधाता यन्निंबानांपरिणतफलस्फीतिरासादनीयापच्चे तस्याःकवलनकलाकोविदः काकलोकः पूर्वेस्तुतिपर्यवसायीदंनिंदापर्यवसायीतिभेदः ९ सारूप्यमपिकार्यस्यकारणेनसमंविदुः नीचप्रवणतालक्ष्मीर्जल जायास्तवोचिता द्वंद्वितीयविषमप्रतिद्वंद्विसमं यथावा दवदहनादुत्पन्नोधूमोघनतामवाप्यवर्षैस्तं यच्छमयतितद्युक्तंसो पिचदवमेवनिर्दहति यथावा आदौहालाहलहुतभुजादत्तहस्तावलंबोबाल्येशंभोर्निटिलमहसावद्धमैत्रीनिरूढः प्रौढोराहो रपिमुखविषेणांतरंगीकृतोयः सोयंचंद्रस्तपतिकिरणैर्मामितिप्राप्तमेतत् पूर्वत्रकारणस्वभावानुरूप्यंकार्यस्यात्रागंतुकतदीयदु ष्टसंसर्गानुरूप्यमितिभेदः

णस्यसोत्पादकनाशकत्वात्कार्यस्यापिधूमस्यतथात्वमुचितमित्यर्थः आदाविति विरहिण्याइयमुक्तिः सोयंचंद्रः मां किरणैस्तपतीत्येतत्सांप्रतंन्यायप्राप्तमित्यर्थः सकः यआदौहालाहलरूपेणहुतभुजाग्निनादत्तोहस्तावलंबोयस्यसः निटिलंललाटंतत्संबंधिमहसानेत्राग्निना बद्धयासंबद्धयामैत्र्यानिरूढः प्रसिद्धः प्रौढोयुवाराहोर्मुखसंबंधिभिर्विषैरंतरंगीकृतः ग्रहणकालेसंपर्कातिशयादंतरंगतांप्रापितइत्यर्थः अत्रका र्यस्यतापस्यकारणीभूतचंद्रगतदुष्टसंसर्गानुरूप्यंभेदांतरमाहविनेति अनिष्टंविनायमर्थकर्तुमुद्यतस्तन्निद्धिरपिसममित्यनुषस्यायोज्यंयदर्थमितिपा

पुरुइतिवारणंनिवारणंवारणोगजश्चपुक्रोनस्यादपितुस्यादेवेत्यर्थः शोभनइतिकचित्पाठः साधुरेव अपिसंगृहीतस्य अपिशब्दसंगृहीतस्यनर्मवचनंपरिहा
सवचनंअत्रेष्टावाप्तिः श्लेषकल्पितावोध्याइष्टार्थप्रतीतिरितिइष्टार्थत्वेनप्रतीतिरित्यर्थः अप्रतिहतइति अनिष्टस्येष्टभिन्नत्वेनज्ञानकालेऽनिष्टत्वेना
प्रतिभासादितिभावः ॥ ६ ॥ उच्चैरिति गजैरटनंतदारोहणपूर्वकंगमनं इहत्वन्नगरे उषितोस्मित्रासेऽकृतवानस्मितदेव मत्प्रार्थ्यमानमेवउच्चाटनंदूरनि
रसनमेवउच्चैर्गजैरटनंप्रतिमालंभयसेप्रापयसिहियस्मात महतांसेवाविफलानभवतीतिसुखेस्कृतिः ततोदूरनिरसनरूपार्थांतरपरिग्रहेणाविषमालं

विनानिष्टंचतत्सिद्धिर्यदर्थंकर्तुमुद्यमः पुक्रोवारणलाभोयंस्यान्नतेवारणार्थिनः इदंसममनिष्टस्याप्यवाप्तिश्चेत्यर्थसंगृहीतस्यत्रिवि
धस्यापिविषमस्यप्रतिद्वंद्विइष्टावाप्तिरनिष्टस्याप्रसंगाच्च अत्रगजार्थितयाराजानमुपसर्पंतंतद्दौवारिकेवार्यमाणप्रतिनर्मवच
नमुदाहरणं नचात्रनिवारणमनिष्टमापन्नमित्यनुदाहरणत्वशंकनीयं राजद्वारिक्षणनिवारणसंभावितमितितदंगीकृत्यप्रवृत
स्यविषमालंकारोदाहरणेष्विवातर्कितोत्कटानिष्टापत्त्यभावात् किंचयत्रातर्कितोत्कटानिसत्वेश्लेषमहिम्नादृष्टार्थत्वप्रतिपत्तिः
तत्रापिसमालंकारोऽप्रतिहतएव ६ ॥ उच्चैर्गजैरटनमर्थयमानएवत्वामाश्रयन्निहचिरादुषितोस्मिराजन् उच्चाटनंत्वमपिलंभ
यसेतदेवमामद्यनेवविफलामहतांहिसेवा अत्रयद्यपिव्याजस्तुतौस्तुत्यानिंदाभिव्यक्तिविवक्षायांविषमालंकारः तथापिप्राथ
मिकस्तुतिरूपवाच्यविवक्षायांसमालंकारोननिर्वीयते एवंपत्रेष्टावाप्तिसत्वेपिश्लेषवशादसतोनिष्टार्थस्यप्रतीतिस्तत्रापिसमालं

कारस्फूर्त्तौनिंदायापर्यवसानंराऽतेनवैषम्यस्यनिंदारूपस्यव्याजस्तुतिविषयत्वेनतयाऽपवादइतिनिरस्तंविषमस्यनिंदामूलत्वेनतद्रूपत्वाभावादिति इष्टार्था
वाप्तिसत्वेपिवास्तविकेष्टार्थप्राप्तिसत्वेपि नक्षतिरिति अनिष्टप्रतीतेराभासरूपत्वेनापर्यवसानादितिभावः शास्त्रमितितदेव नखल्वेव एकपद
त्वेनेत्युपलक्षणेवृतीयाएकपदत्वोपलक्षितंयद्वस्तुसदर्थांतरपरंरूपांतरमित्यर्थः अर्थांतरंत्ववास्तविकंपरस्तुत्यतिकथनेनदर्शितमेव श्लेषलभ्येति ७ ॥

श्लेषलभ्या असती वस्तुतोऽविद्यमाना याइष्टावाप्तिस्तस्याः प्रतीतिमात्रेण समालंकारोदाहरणमपि गतं अधिगतमात्रपदेनानिष्टावाप्तिप्रतीतिव्यवच्छेदः पुक्तो वारणलाभोयमित्यत्र किंचिदनिष्टस्य उच्चैरित्यत्र चोत्कटानिष्टस्य प्रतीतिसत्वादुदाहरणांतरमाह यथेति नायिकां प्रति नायकस्योक्तिः हे तन्वि तपः शोभनगत्यैव भवतीति सत्यं यद्यस्मादब्जकमलं अंबुषु जलेषु रविं प्रतीक्षते तादृशं सततमातपः कृत्वा त्वत्पदरूपेण जन्मनि समस्तेभ्यः कमलेभ्यः कमनीयं सुंदरं सत् सुगतिं शोभनां गतिमनुभवतीत्यन्वयः अब्जकमलस्योत्तमलोकरूपगतिप्राप्त्यये तपस्यतस्तदलाभे विशोभनगमनस्य गतिशब्दश्लेषबलादिष्ट

यथा शास्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः तदेव शास्त्रं कृतवान् स्वपितुराज्ञां नलंघिता अत्र पितुराज्ञां नलंघितेत्यनेन विरोधालंकारा
भिव्यक्त्यर्थं न खल्वित्यत्र पदद्वयविभागात्मकरूपांतरस्यापि विवक्षायाः सत्वेऽपि न खलु नातीति न खल्वित्येकपदेन वस्तुसदर्थांतरपर
रूपांतरमादाय समालंकारोऽप्यस्यैव श्लेषलभ्यासदिष्टावाप्तिप्रतीतिमात्रेणापि गतमुदाहरणं यथा सत्यं तपः सुगत्यै यत्तन्व्यंबुषु
रविप्रतीक्षं सतत् अनुभवति सुगतिमब्जं त्वत्पदजन्मनि समस्तकमनीयं विचित्रं तत्प्रयत्नश्चेद्विपरीतः फलेच्छया नमंति संतस्त्रैलोक्या
दपि लब्धुं समुन्नतिं यथा वा मलिनयितुं खलवदनं विमलयति जगंति देवकीर्तिस्ते मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रता
पोऽपि अधिकं पृथुलाधारादाधेयाधिक्यवर्णनं ब्रह्मांडानि जले यत्र तत्र भांति न ते गुणाः अत्र यत्र महाजलौघेऽनंतानि ब्रह्मांडानि बुद्बु
दकल्पानीत्याधारस्यातिविशालत्वं प्रदर्श्य तत्र नमातीत्याधेयानां

गुणानामाधिक्यं वर्णितं

त्वेन प्रतीतेरिष्टावाप्तिप्रतीतिमात्रं न त्वनिष्टप्रतिभासोऽपीति इत्यलंकारचंद्रिकायाम् समालंकारः विचित्रमिति फलेच्छया विपरीतः प्रयत्नश्चेद्विचित्रं नामालंकारः इष्टविपरीताचरणमिति यावत् नमंतीति नम्रीभवंतीत्यर्थः समुन्नतिं उच्चतां मलिनयितुमिति मलिनीकर्तुमित्यर्थः विमलयति निर्मलीकरोति जगंति त्रिभुवनानि मित्रं सुहृत् मित्रः सूर्यश्च इति विचित्रालंकारः अधिकमिति पृथुलादाधेयापेक्षया विशालादाधारादाधेयस्याधिक्यवर्णनमेकोऽधिकालंकारः युगांतेति युगांतकाले प्रलये प्रतिसंहृतः स्वस्मिन् लयं प्रापित आत्मा स विलासरूपः प्रये

योयेनतादृशस्यकैटभद्विषः

श्रीकृष्णस्य पश्यतस्तन्नौ जगंति भुवनानि विकाशसहितं यथा स्यात्तथा आसत स्थितानि तत्र तस्य तन्नौ तपोधनस्य नारदस्याभ्यागमात्संभवोपासंतामुदः प्रीतयोनमगु
रित्यन्वयः पृथ्वीति विशालादाधेयाद्यदाधारस्याधिक्यं तदप्यधिकं किंयदिति अपरिमितमित्यर्थः वाक् शब्द एव ब्रह्म इयं च परमेश्वरं प्रति भक्तस्योक्तिः अस
वाधेति अस्तं कस्यार्थः अहोइति माति संमाति मातुमशक्यः अपरिमितः अत्र भुवनत्रयोदरे तन्वाधारयोः शब्दब्रह्मभुवनोदरयोरप्रस्तुतत्वेनाप्रशंसनीय
त्वात्तदाधिक्यवर्णनमयुक्तमित्याशंक्याह अत्रेति न चात्राप्रस्तुतप्रशंसा शंकनीया प्रस्तुतस्याप्यभिधानादिति इत्थं चाधाराधेययोरन्यतरस्य तनोरप्याधिक्यव

यथा वा अहो विशालं भूपाल भुवनत्रितयोदरं माति मातुमशक्योऽपि यशोराशिर्यदत्र ते अत्र यद्यप्युदाहरणद्वयेऽपि किंयद्ब्रह्मेति अ
हो विशालमिति चाऽऽधारयोः प्रशंसा क्रियते तथापि तनुत्वेन सिद्धवस्तुनयोः शब्दब्रह्मभुवनोदरयोर्गुणयशोराश्यधिकरणत्वेनाधि
कत्वप्रकल्पनेव प्रशंसा क्रियत इति तत्प्रशंसाप्रस्तुतगुणयशोराशिप्रशंसायामेव पर्यवस्यति अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्म
ता मणिमालोर्मिका तेऽद्य करे जपवटीयते ८ ॥ अत्र मणिमालामयोर्मिका तावदंगुलिमात्रपरिमितत्वात्सूक्ष्मा सापि विरहिण्याः क
रे कंकणवत्प्रवेशिता तस्मिन् जपमालावल्लंबत इत्युक्त्या ततोपि करस्य विरहकार्श्यादतिसौक्ष्म्यं दर्शितं यथा वा यन्मध्यदेशा
दपि ते सूक्ष्मं लोलाक्षि दृश्यते मृणालसूत्रमपि ते न संभाति स्तनांतरे अन्योन्यं नाम यत्र स्यादुपकारः परस्परं त्रियामा शशिना भा

र्णनमिति सामान्यलक्षणं बोध्यं इत्यधिकालंकारः अल्पमिति यदिति सामान्ये नपुंसकं स्वापेक्षया सूक्ष्मादाधेयादाधारस्य सूक्ष्मता यत्तदल्पं नामालंकारः
मणीति मणिपंक्तिरूपा ऊर्मिका अंगुलीयकं ते करे अद्य विरहावस्थायां जपमालायत इत्यर्थः वटशब्दस्य गुटिकापर्यायत्वात् अतिसूक्ष्मता आधेयभूतमाल
लापेक्षयापि सूक्ष्मता यदिति हे चंचलाक्षि तव मध्यनामादपि यत्सूक्ष्मं दृश्यते तत् मृणालसूत्रमपि तव स्तनयोरंतरे मध्ये न माति इत्यन्वयः इत्यल्पालंकारः
अन्योन्यमिति यत्र परस्परमुपकारः स्यात्तत्रान्योन्यं नामालंकारः त्रियामा रात्रिः पयेति उर्ध्वाक्षः उर्ध्वं नयनः प्रपापालिका प्रपादानाधिकृता काचिद्वनिता ॥

धारां जलधारां तनुं सूक्ष्मां अत्रेति प्रपापालिकायाः पथिकेनोपकारः कृत इत्यन्वयः स्वासक्त्येत्यादि प्रपापालिकायाविशेषणं संपादनेन करणभूतेन एवं प्रपापालिकयापि पथिकस्योपकारः कृत इत्यन्वयः यत्तु स्वमुखावलोकनमभिलषंस्यादित्यत्र स्वशब्दस्य प्रपापालिकाबोधकत्वमेव न्याय्यं न पान्थबोधकत्वं यद्विशेषणघटकत्वेन स्वनिजादिशब्दा उपात्तास्तद्बोधका इति व्युत्पत्तिरिति केचिदुक्तं तदयुक्तं मुख्यविशेषणघटकस्यैव स्वनिजादिशब्दस्य मुख्यविशेष्यमात्रगामित्वव्युत्पत्तेः यथा देवदत्तस्य पुत्रः स्वमातृभक्त इत्यादौ स्वशब्दस्य तादृशपुत्रगामित्वं न तु गुणभूतदेवदत्तगामित्वं अत एवेदृशस्थले एव

यथा वा यथोर्ध्वाक्षः पिबत्यंबु पथिको विरलांगुलिः तथा प्रपापालिकापि धारां वितनुते तनुं अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषंत्या विरलांगुलिकरणतश्चिरं पानीयदानानुवृत्तिसंपादनेनोपकारः कृतः तथा प्रपापालिकयापि पानीयपानव्याजेन चिरं स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणेन चिरं पानीयपानानुवृत्तिसंपादनेनोपकारः कृतः अत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेपि परस्परोपकारोपि न निवार्यते ९॥ विशेषः स्यात्तमाधारं विनाप्याधेयवर्णनं गतेपि सूर्ये दीपस्थास्तमश्छिंदंति तत्कराः यथा वा कमलमनंभसि कमले कुवलये तानि कनकलतिकायां सा च सुकुमारसुभगेत्युत्पातपरंपरा केयं अत्राधेयस्य सूर्यस्य प्रसिद्धाधारस्याभावेपि तत्कराणामन्यत्रावस्थिति रुक्ता द्वितीये त्वंभसः

निजतनुस्वच्छलावण्यवापीसंभूतांभोजशोभां विदधदभिनवोदंडपादो भवान्या इत्यत्राभवन्मतयोगत्वं दूषणमुदाहृतं मम्मटभट्टैः काव्यप्रकाशिकायां अन्यत्र तु न स्वविशेष्यगामित्वनियमः स्वाश्रितानां विप्राणामयं पालकः स्वाज्ञाकारिणां भृत्यानामयं कल्पवृक्ष इत्यादौ व्यभिचारात् न चैवं स्वदाररतानां विप्राणामहं भक्त इत्यत्र मदीयदाररतानामिति प्रतीतिः स्यादिति वाच्यं तात्पर्यस्य नियामकत्वेनापत्त्यभावादिति इत्यन्योन्यालंकारः ९ विशेष इति ख्यातं प्रसिद्धं तदुक्तं विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिरिति छिंदंति नाशयंति तत्कराः सूर्यकिरणाः रात्रावादित्यस्याग्निप्रवेशश्रवणाद्दीपस्थत्वं कल्पितमिति॥

अत्र कमलत्वादिना मुखादेरध्यवसानं बोध्यं कुवलयेने त्रे एतानि कमलकुवलयानि कनकलतारूपायां कामिन्यां सा च कनकलतिका च निर्देशः क ॥
यत्र कमलत्वादिना मुखादेरध्यवसानं बोध्यं कुवलयेने त्रे एतानि कमलकुवलयानि कनकलतारूपायां कामिन्यां साव कनकलतिका च निर्देशः क ॥ प्रभेदांतरमाह
यनं आप्रलयं प्रलयपर्यंतं दिवमिति दिवमुपयातानामपि येया मनल्पगुणगणयुक्ता गिर आकल्पपर्यंतं जगंति भुवनानि रमयंतीत्यन्वयः प्रभेदांतरमाह
यदीति तृतीयप्रकारमाह किंचिदिति किंचित्सदायां रंभेणाशक्यस्य वस्त्वंतरस्य कृतिः करणं च सः विशेषः त्वामिति प्रभुं प्रतिपाचकोक्तिः स्फुरदिति उत्कटः

प्रसिद्धाधारस्याभावे पि कमलकुवलययोरत्रावस्थितिरुक्ता किंचित्प्रसिद्धाधाररहितानामाधारांतरनिर्देशं विनैव प्रलयवस्थिते
वर्णनं दृश्यते यथा दिवमप्युपयातानामाकल्पगुणगणा येषां रमयंति जगति गिरः कथमिव कवयो न ते वंद्याः अत्र कवीनामभावे
पि नद्गिरामाधारांतरनिर्देशं विनैवाप्रलयमवस्थितिर्वर्णिता विशेषः सोपि यदेकं वस्त्वनेकत्र वर्ण्यते अंतर्बहिः पुरः पश्चात्सर्वं
दिक्ष्वपि सैव मे यथा वा त्वदयान्नापयातोसि दिक्षु सर्वासु दृश्यसे वत्सरामगतो सीति संतापेनानुमीयसे किंचिदारंभतोशक्यवस्त्व
तरकृतिश्च सः त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणं यथा वा स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजता नवद्यविद्या विधिना
ससृजे न वो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च अत्राद्यराजदर्शनारंभेण कल्पवृक्षदर्शनरूपाशक्यवस्त्वंतरकृतिः द्वितीयराज
सर्गारंभेण मनोभवादिसृष्टिरूपाशक्यवस्त्वंतरकृतिः स्याद्व्याघातोन्यथाकारि तथाकारि क्रियेत चेत् यैर्जगत्प्रीयते हंति तैरेव कुसु
मायुधः यद्यत्साधनत्वेन लोके अवगतं तत्केनचित्तद्विरुद्धसाधनं क्रियते चेत्स व्याघातः यद्वा यत्साधनतया केनचिदुपात्तं तदन्येन तत्प्रति
द्वंद्विना तद्विरुद्धसाध

नतापरूपोज्ज्वलनो ग्निर्यस्य सेत्यर्थः उक्तविशेषणं त्वां सृजता विधिना भुवि नवो मनोभवादिः ससृजे सृष्ट इति सत्यमित्यन्वयः अत्र चोक्त
भेदत्रयान्यतमान्यलक्षणं बोध्यं इति विशेषालंकारः स्यादिति तथाकारितत्कार्यसाधनवस्तु अन्यथाकारि तत्कार्यविरुद्धकार्यसाधनं चेत् क्रियेत तदा व्याघातोऽलंका
रः स्यादित्यर्थः यैरिति यैः कटाक्षविभ्रमादिभिर्जगत्प्रीयते तैः तु स्मरति न रैव कुसुमायुधो हंतीत्यन्वयः ॥ विरूपाक्षस्य हरस्य जयिनीः निजोपकारिणोः स्तुवे स्मा

भेदांतरमाह सौकर्येणेति कारणस्यानुगुण्याधिक्येनेत्यर्थः निबद्धा कविवर्णिता कार्यविरोधिनी पराभिमतकार्यविरुद्धा दयेति दिग्विजयाय प्रस्थितं राजानं प्रति यु
वराजस्योक्तिः बालइत्यतो मयि दयायौवराज्ये स्थापनरूपा चेत्तदा तस्मादेव हेतोरहं तवापरित्याज्य एव किंतु स्तनमहनेतव्य इत्यर्थः अर्थादिति हेतौ पंचमी अन्व
पश्चास्य समर्थ्यते इत्यनेन अन्येन वत्काजेत्रेति जयसाधनेत्यर्थः लुब्धइति तयैव शंकया दारिद्र्यशंकयैव ननु निश्चितं अत्र पूर्वार्धे लुब्धस्य दानाभावसाधकत्वाभि
मत दारिद्र्यशंकारूप पूर्वपक्षनिरूपणं दातुस्तस्यैव विरुद्धदानसाधकत्वेन संमतेति पूर्वविरुद्धपक्षनिरूपणमुत्तरार्द्धे यद्यपि दारिद्र्यस्य तात्कालिकत्वेन जन्मां

इत्यादग्धं मनसिजं जीवयंति दृशैव याः विरूपाक्षस्य जयिनीस्तास्तुवे वामलोचनाः सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी ॥
इत्यत्रैवाहादइतिमप्यपरित्याज्य एव ते कार्यविशेषनिष्पादकतया केनचित्संभाव्यमानादर्थादन्येन कार्यविरोधिक्रियासौकर्येण
समर्थ्यते चेत्सोपि व्याघातः कार्यविरुद्धक्रियायांसौकर्यं कारणस्य स्फुतरां तदानुगुण्यं यथा जैत्रयात्रोन्मुखेन राज्ञा युवराजस्य राज्य
एव स्थापने यत्कारणत्वेन संभावितं बाल्यं तत्स्यस्तुनतहिरुद्धस्य सहनयनस्यैव कारणतया युवराजेन परित्यागस्यायुक्तत्वं दर्शय
ता समर्थ्यते यथा वा लुब्धोन विसृजत्यर्थं नरो दारिद्र्यशंकया दातापि विसृजत्यर्थं तयैव ननु शंकया अत्र पूर्वोत्तरार्द्धपक्षप्रतिप ॥
क्षरूपैकयोश्चिद्धचनेइतिलक्षणानुगतिः गुंफः कारणमालास्याद्यथा प्राक्प्रांतकारणैः नयेन श्रीः श्रियात्यागस्त्यागेन विपुलं यशः उ
नरोत्तरकारणभूत पूर्वपूर्वैः पूर्वपूर्वकारणभूतानंतरोत्तरैर्वा वस्तुभिः कृतोगुंफः कारणमाला आद्योदाहृता द्वितीया यथा भवति नर
काः पापात्पापं दारिद्र्यसंभवं दारिद्र्यमप्रदानेन

त्वरीणत्वेन चशंकाभिन्नातयाप्यभेदाध्यवसायान्न लक्षणासमन्वय इतिबोध्यं सामान्यलक्षणं पू
र्ववदस्यमतघटितमनुसंधेयमितिदिक् इतिव्याघातालंकारः गुंफइति ग्वनेत्यर्थः केस्तत्राह यथेति प्राक्च प्रांतंचप्राक्प्रांते ते अनतिक्रम्येति यथा प्राक्प्रा
तं यानि कारणानि तैः पूर्वपूर्वं प्रतिकारणैरुत्तरोत्तरं प्रतिकारणैश्चेत्यर्थः एवंचोत्तरोत्तरेत्यादिव्युत्क्रमेणाभिधानमुदाहरणक्रमानुरोधेनेति ज्ञेयं इतिकारण

दोःस्तंभयोर्भुजस्तंभयोर्दोलितमांदोल

गृहीतेति वक्ष्यमाणया गृहीतमुक्तरीत्यानिबद्धार्थपंक्तिरेकावलिरलंकारः नेत्रइति तस्यभूभुज इति सर्वत्र संबध्यते दोःस्तंभयोर्भुजस्तंभयोर्दोलितमांदोल

नंययोस्तौ दोलनाविति पाठे दोला दोलनं ययोरस्तीति विग्रहः रत्नमुकुरो रत्नदर्पणः दिक्कालेति दिक्कालात्मभिस्तुत्याय स्याकाशस्य विभुताय स्वतत्राकाश

विशेषणद्योततेसूर्यः यत्रचचंद्रे अमुष्यसूर्यस्यकिरणाअमृतरूपाभवंति सचचंद्रोयासामपांराशेः समुद्रादभूत् यश्चाग्निस्तासामपांपायितभवात ॥ च

गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता नेत्रेकर्णांतविश्रांतेकर्णौदोःस्तंभदोलितौ दोःस्तंभौजानुपर्यंतप्रलंबनमनोहरौ जानुनीरत्न

मुकुराकारेतस्यहिभूभुजः उत्तरोत्तरस्यपूर्वपूर्वंविशेषणभावः पूर्वपूर्वस्यउत्तरोत्तरविशेषणभावोवागृहीतमुक्तरीतिः तत्राद्यः

प्रकारउदाहृतःद्वितीयोयथा दिक्कालात्मसमैवयस्यविभुजायस्तत्रविद्योततेयत्रामुष्यसुधीभवंतिकिरणाराशेःसयासामभूत

यस्त्यित्तमुषःसुधोस्यहविषेयस्तस्यजीवातवेवोद्यायहुणमेषमन्मथरिपोस्ताःपांतुनोमूर्तयः दीपकेकावलीयोगान्माला

दीपकमिष्यते स्मरेणहृदयेतस्यास्तेनत्वयिकृतास्थितिः अत्रस्थितिरितिपदमेकंस्मरेणतस्याहृदयेस्थितिःकृता हृदयेन

त्वयिस्थितिःकृतेत्येवंवाक्यद्वयान्वयिअतोदीपकं गृहीतमुक्तरीतिसद्भावादेकावलीचेतिदीपकेकावलीयोगअथवासंपामाग

णमागतेनभवताचापेसमारोपितेदेवाकर्णययेनयेनसहसायद्यत्समासादितं कोदंडेनशराःशरैररिशिरस्तेनापिभूमंडलं तनत्व

भवताचकीर्तिरतुलाकीर्त्याचलोकत्रयंअत्रयेनयेनसहसायद्यत्समासादितमितिसंक्षेपवाक्यस्थितमेकंसमासादितपदंकोदंडे नशरादइत्यादिषुषट्स्वपि

रष्वित्तमितिकोशात् पश्चयजमानउषस्तुप्रातःकालेषुअस्यवन्हेर्हेविषेहविर्दानायभवतियश्चवायुःप्राणरूपस्त ॥ योवोयुष्मान्पांतित्यन्वयः

स्ययजमानस्यजीवातवेजीवनौषधायभवति यस्याश्चपृथिव्यागुणंगंधएववायुर्वोढानाएतामन्मथरिपोहरस्याष्टमूर्तयोवोयुष्मान्पांतिअन्वयः

पूर्वेकावली मालादीपकमिति मालादीपकंनामालंकारः एकमितिवाक्यद्वयान्वयित्वेनान्वितं अतइति एतावन्मात्रेणादीपसादृश्याद्दीपकंनतुप्रागुक्तदी

उ. टी. प्रकृताप्रकृतानांसादृश्यस्यगम्यत्वेनदंगीकारादितिभावः संख्येति कोदंडेनधनुषाशराः समासादिताः शरैः शत्रुमस्तकं समासादितंतेनशत्रुमस्तकेनापि भू
चं. मंडलंतेनभूमंडलेनत्वंपालकः समासादितः भवताकीर्तिरासादिताकीर्त्याचलोकत्रयंसमासादितमित्यनुषंगेणान्वयः इतिमालादीपकं ६ सारइति।
६१ मारेनामालंकारः तस्याः सुधातः अंतरिति विष्णोरंतः उदरं त्रयाणांलोकानांसमाहारस्त्रिलोकी सोपिविष्णुरपिफणिनोनागानामीश्वरेशेषेशेतेनिद्रा
ततउचितलिंगवचनविपरिणामेनान्वेतीतिदीपकंशरादीनामुत्तरविशेषणभावादेकावलीचेतिदीपकैकावलीयोगः ६ उत्तरोत्तरमु
त्कर्षः सारइत्यभिधीयते मधुरंमधुतस्मादपिसुधातस्याः कवेर्वचः यथावा अंतर्विष्णोस्त्रिलोकीनिवसतिफणिनामीश्वरेसो
पिशेतेसिंधोः सोप्येकदेशेतमपिचुलुकयांकुंभयोनिश्चकार घत्तेखद्योतलीलामयमपिनभसिश्रीनृसिंहक्षितींद्रत्वत्कीर्तेः क
र्णनीलोत्पलमिदमपिचप्रेक्षणीयंविभाति अयंश्लाघ्यगुणोत्कर्षः अश्लाघ्यगुणोत्कर्षेयथा तृणाल्लघुतरस्तूलस्तूलादपिचया
चकः वायुनाकिन्ननीतोसौमामयंप्रार्थयेदिति उभयरूपोयथा गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभोमहत् नभसोपिमहद्ब्रह्म
ततोप्याशागरीयसी अत्रब्रह्मपर्यंतेषुमहत्वंश्लाघ्यगुणः प्रकृतार्थेत्वाशायामश्लाघ्यगुणः यथासंख्यंक्रमेणैवक्रमिकाणांसमन्व
यः शत्रुंमित्रंविपत्तिंचजयरंजयभंजय यथावा शरणंकिंप्रपन्नानिविषवन्मारयंतिवा नत्यज्यंतेनभुज्यंतेकृपणेनधनानियत्
अमुंक्रमालंकारइतिकेचिद्व्याजह्रुः पर्यायोयदिपर्यायेणैकस्यानेकसंश्रयः पद्मंमुक्त्वागताचंद्रंकामिनीवदनोपमा अत्रैकस्यका
तिसोपिशेषोपिसिंधोरेकदेशतिष्ठतीतिशेषः तममपिसिंधुमपिकुंभयोनिः अगस्त्यः चुलुकयाअपा मिनीवदनसादृश्यस्यक्रमेणपद्मचंद्ररूपा
रपीतवान् अयमगस्त्योपिनभसिगगनेखद्योतशोभांधत्ते इदंगगनमपिप्रेक्षणीयंसंदरं त्वत्कीर्तेः कर्णभूषणंनीलोत्पलंविभातीत्यन्वयः तूलः कार्पासः
प्रकृतार्थोशायां प्रकृतार्थहृपायामाशायां इति सारालंकारः यथासंख्यमिति क्रमिकाणांक्रमेणकानांपदार्थानां तेनैवक्रमेणान्वयोयथासंख्यंनामालंका

तत्किंनाम निशरणं प्रपन्नानि यत्त्वन मुच्यंते तत्किं विषयव न्यासयंती तिक्रमेणान्वयः केचिद्दामनादयः इतियथा संस्मात्ले कारः पर्यायइति पर्यायेण क्रमेण
अनेकसंश्रयः अनेकाश्रितत्वं तदुक्तं एवंक्रमेणानेकस्मिन् पर्यायइति पद्ममिति रात्रौपद्मसंकोचात्तत्यागः ॥ ९ ॥ अतएवत्यागेन पूर्वसंश्रयणाक्षेपादे
व श्रोणीतिजघनेंवधस्तनुतां कृशतांत्यजति मध्यभाग स्तांसेवते आश्रयति वक्षः स्थलं कुचसविवता कुचसहितत्वं यत्तेवक्रत्वद्वितीय अत्रपूर्ववक्षसोः
द्वितीयत्वावगमात्पर्यायसंभवोज्ञेयः अद्वितीयत्वं द्वितीयरहितत्वमनुपमत्वंवैकत्वेनाध्यवसितंएवंचोदाहरणद्वयेपिपूर्वाधारसमाश्रयणंगम्यं उत्तराधा

यद्यपिपद्मसंश्रयणंकंठतोनोक्तंतथापिपद्मंमुक्त्वेतितत्परित्यागोक्त्याप्राक्तत्संश्रयाक्षेपेण पर्यायनिर्वाहः ९ अतएवश्रोणीवंध
स्त्यजतितनुतांसेवतेमध्यभागः पद्भ्यांमुक्तास्तरलगतयः संश्रितालोचनाभ्यांधत्तेवक्षः कुचसचिवतामद्वितीयंतुवक्त्रंत्वद्गात्रणा
गुणविनिमयः कल्पितोयौवनेनेत्यत्रपर्यायकाव्यप्रकाशकदुदाजहारसर्वत्रशाब्दः पर्यायोयथा नन्वाश्रयस्थितिरियंतवका
लकूटकेनोत्तरोत्तरविशिष्टपदोपदिष्टा प्रागर्णवस्यहृदयेवृषलक्ष्मणोथकंठेधुनावससिवाचिपुनःखलानां सर्वोप्ययंशुद्धप
र्यायः संकोचपर्यायोयथा प्रायश्चरित्वावसुधासुशेषांछायामुविश्रम्यततस्तरूणां प्रौढिंगतेसंप्रतितिग्मभानौशैत्यंशनैरंतरपा
मपासीत् अत्रशैत्यस्यांतरोत्तरमाधारसंकोचात्संकोचपर्यायः विकासपर्यायोयथा विंबोष्ठएवरागस्तेतन्विपूर्वमदृश्यत अधुः धराजनि ॥
नाहृदयेप्येषमृगशावाक्षिदृश्यते अत्ररागस्यपूर्वाधारापरित्यागेनाधारांतरसंक्रमणमितिविकासपर्यायः एकस्मिन्नप्यनेकवा
पर्यायः सोपिसंमतः अधुनापुलिनंतत्रयत्रस्रोतः

रसमाश्रयणांशाद्रमिति सर्वत्रसर्वाधारसमाश्रयणांशो नन्विति हे कालकूट उत्तरोत्तरविशि
ष्टमुत्कृष्टंयदस्थानंयस्यांतादृशीइयमाश्रयस्थितिस्तवकेनोपदिष्टेत्यन्वयः हृदयेअभ्यंतरेअवसइतिशेषः अथानंतरं वृषलक्ष्मणोहरस्यकंठे अधुनापु
नरितिसंबंधः शुद्धः संकोचविकासामिश्रितःप्रायइतिशैत्यंप्रायोऽश्रया वसुधाहेमंते चरित्वाततोवसंतेतरूणांछायासुविश्रम्यसंप्रति ग्रीष्मेतिग्मभानौसूर्येप्रौढिंश

गलपंथामेसति शनैरपांजलानामांतरभ्यंतरे अयासीत गच्छ
ति स्मेतार्थः विंबोष्ठ एवेति विंबोफलस्सदृशो ओष्ठे रागोरक्तिमा

कु॰ टी॰ अनुरागस्त्वरागः रागः अत्र रागस्याभेदेऽप्यभेदाध्यवसायादिकं यत्तु एकसंबंधनाशोत्तरमपरसंबंधसत्त्वेऽवल्लोके पर्यायपदप्रयोगात् अर्गोनिर्बंध इति प्रकाशोदाहरणे
वं॰ तत्र चैव दृष्टत्वाच्च विशेषः एवं चात्र पर्यायकथनमयुक्तमिति केनचिदुक्तं तत्प्रकाश एव विशेष इत्युदाहरणे पर्यायसमर्थनात् अतप्रलपनमिवोपेक्षणी
६० यं आलंकारिकपरिभाषितानां शब्दानां लोकव्यवहारविसंवादस्य किंचित्करत्वाच्चेति दिक् भेदांतरमाह एकस्मिन्निति पर्यायेणेत्यनुवर्तते एकस्मि
न्नाधारे क्रमेणापद्यनेकं भवति सोऽपि पर्यायालंकारः संमत इत्यर्थः ५ पुरेति अस्माकमित्यस्मदो द्वयोश्चेति द्वयोरपि बहुवचनं पुरेत्यनेनस्मृ लोतीतकाल

यथा वा पुराभूदस्माकं प्रथममविभिन्ना तनुरियं ततोऽनु त्वं प्रेयानयमपि हताशाः प्रियतमाः इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदं अत्र दंपत्योः प्रथममभेदः ततः प्रेयसीप्रियतमभावः ततो भार्यापतिभावः इत्याधेय
पर्यायः परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः जग्राहैकं शरं मुक्त्वा कटाक्षात्सरिपुश्रियं यथा वा तस्य च प्रवयसो जटायु
षः स्वर्गिणः किमिव शोच्यतेऽधुना येन जर्जरकलेवरव्ययात्क्रीतमिंदुकिरणोज्ज्वलं यशः परिसंख्या निषिध्यैकमेकस्मिन्वस्तुय
न्त्रणं स्नेहक्षयः प्रदीपेषु न स्वांतेषु नतभ्रुवां यथा वा विलंघयंति श्रुतिवर्त्म यस्यां लीलावतीनां नयनोत्पलानि बिभर्ति यस्याम
पि वक्रिमाणमेको महाकालजटार्धचंद्रः आद्योदाहरणे निषेधः शाब्दः द्वितीये त्वार्थः विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता स
यः शिरांसि चापान्वा नमयंतु महीभुजः अत्र संधिविग्रहप्रमाणप्राप्तयोः शिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्य

उच्यते तत्रापि प्रथमं तनुरविभिन्नाऽभूत् ततोऽनु वितर्के त्वं प्रियतमः वयं नियतमाः इदानीं तु त्वं नाथः पतिः वयं भार्याः इतोऽपरं किमनिष्टमिति शेषः कु
लिशं वज्रं अत्र त्वं प्रेयानित्येकवचनेन एकरूपे प्रेमपात्रत्वं व्यज्यते प्रियतमा इत्यादिबहुवचनेनैकरूपतव्यतिरेक इति बोध्यं इति पर्यायः परिवृत्तिरि
ति न्यूनाधिकयोर्मिथः परस्परं विनिमयः परिवृत्तिरलंकारः जग्राहेति कटाक्षपूर्वकं एकं शरं मुक्त्वारिपोः श्रियं जग्राहेत्यर्थः तस्य चेति प्रवयसोऽति

योर्विकल्पः यथा वा

वृद्धस्य जटायुषो गृध्रविशेषस्य स्वर्गं गतवतः

किमिवशोचनीयंनकिंचित जर्जरंजीर्णतरकलेवरंशरीरंतस्यजयोरावणेनसहयुद्धेस्यागस्तस्माग्रधाःक्रीतंत्वागौरंदत्वापणेनगृहीतमित्यर्थः इतिपरिवृत्त्यलं
कार परिसंख्येति एकवस्तुप्रतिषिध्यापरस्मिन्वस्तुनोनियंत्रणंनियमनंपरिसंख्यालंकारः स्नेहेति स्नेहस्तैलादि स्निग्धद्रव्यं अनुरागश्चस्वांतेषुचित्तेषुवि
लंघयंतीति यस्यामुज्जयिनीपुर्यां श्रुतिःकर्णः वेदश्च वर्त्ममार्गं वक्रिमाणंकौटिल्यंवक्राकारतांचमहाकालइतितत्रैवख्यातंशिवलिंगं इतिपरिसंख्याल
कारः संधिविग्रहप्रमाणेति संधिविग्रहयोःकर्त्तव्यताबोधकप्रमाणेत्यर्थः इतिविकल्पः ६॥बहूनामिति युगपत् भावोभवनंतज्जांबहूनांगुंफोनिबंधः

पतत्सुविरतंवारिनंत्स्यतिचकलापिनः अथकांतःकृतांतोवादुःखस्यांतंकरिष्यति प्रियसमागमश्चेन्नमरणमाशंसनीयंमरणेतुनप्रियसमा
गमसंभवइतितयोराशंसायांविकल्पः ६॥बहूनांयुगपद्भावभाजांगुंफःसमुच्चयः नश्यंतिपश्चात्तप्यंतित्रस्यंतिचभवद्द्विषः अवि
रोधेनसंभावितयौगपद्यानांनाशादीनांगुंफनंसमुच्चयः यथावा विस्त्राणाहृदयेत्वयाविनिहितंप्रेमाभिधानंनवंशल्यंयद्विदधातिसा
विधुरितासाधोतदाकर्ण्यतां शेतेशुष्यतिताम्यतिप्रलपतिप्रम्लायतिप्रेंखतिभ्राम्यत्युल्लुठतिप्रणश्यतिगलत्युन्मूर्छतित्रुट्यति अत्र
कासांचित्क्रियाणांकिंचित्कालभेदसंभवेपिशतपत्रपत्रशातभेदन्यायेनयौगपद्यंविरहातिशयद्योतनायविवक्षितमितिलक्षणा॥
नुगतिः अहंप्राथमिकाभाजामेककार्यान्वयेपिसः कुलंरूपंवयोविद्याधनंचमदयंत्यमुं यत्रैकःकार्यसिद्धिहेतुत्वेनप्रक्रांतस्तत्रान्य
पियद्यहमहमिकयाखलेकपोतन्यायेनतत्सिद्धिंकुर्वंतिसोपिसमुच्चयः यथामदेआभिजात्यमेकंसमग्रकारणंतादृगेवरूपादिकं टि
सोपितत्साधनत्वेनावतरतीति यथा
वर्णनमितियावत् समुच्चयालंकारः विस्त्राणेति नायकंप्रतिदूत्याद्युक्तिः हेसाधोत्वयाहृदयेविनिहितंप्रे
माभिधानंनवंशल्यंपारयंतीविधुरिताविरहविह्वलासानायिकायद्विदधाति तदाकर्ण्यतामित्यन्वयः किंतदित्यपेक्षायामाह शेतेनिद्राति ताम्यति
[illegible] प्रेंखति चलति प्रणश्यति नैर्बल्यातिशयेनमृतप्रायाभवति गलति खेदातिशयात् त्रुट्यति क्षीणाभवतीति कासांचि

शतपत्रस्यैकमलस्यपत्रशतंदलशतं अहंप्रायमिकेति अहंपूर्विकेत्यर्थः अहंपूर्वमहंपूर्वमित्यहंपूर्विकास्त्रियामित्यमरः एककार्यान्वयेएक कार्यसाधकत्वे स॰
समुच्चयालंकारः अहमहमिकया परस्पराहंकारेण अभिजात्यं कुलीनत्वं समग्रयुक्तत्वं प्रदानमिति प्रच्छन्नगुप्तं गृहंप्रत्युपगते ऽर्थादतिथौ लक्ष्मयासत्सांनिरु
त्सेकोगर्वाभावः अभिभवोनिंदातद्गंधभूत्याः मौनं अनु द्घाटनं सदसिसभायांपरगुणकृतायाउपकृतिः कथनं श्रुतेः शास्त्रश्रवणे सर्वप्रथमातानांपुरुषमभि
जातंप्रथयतीत्यनेनान्वयः अभिजातंकुलीनं प्रथयतिकथयति इतिसमुच्चयालंकारः ४॥ क्रमिकेति क्रमिकाणामर्थात् क्रियाणामेककारकगतानांगु

प्रदानंप्रच्छन्नंगृहमुपगतेसंभ्रमविधिर्निरुत्सेकोलक्ष्म्यामनभिभवगंधाः परकथाःप्रियंकृत्वामौनंसदसिकथनंचाप्युपकृतेः श्रुतेस्य
तासक्तिः पुरुषमभिजातंकथयति ४॥ क्रमिकैकगतानांतुगुंफः कारकदीपकं गच्छत्यागच्छतिपुनः पांथः पश्यतिपृच्छति यथावा॥
निद्रातिस्नातिभुंक्तेचलतिकचभरंशोषयत्यंतरास्तेदीव्यत्यक्षैर्नचायंगदितुमवसरोभूयआयाहियाहि इत्युद्दंडैः प्रभूणामसकृद
धिकृतैर्वारितान्द्वारिदीनानस्मान्पश्याब्धिकन्येसरसिरुहरुचामंतरंगैरपांगैः आद्योदाहरणे कृतस्यपांथस्यपांथस्यकर्तृका
रकस्यैकस्यगमनादिष्वन्वयः द्वितीयेतुअध्याहृतस्यप्रभुकर्तृकारकस्यनिद्रादिष्वन्वयइत्येकस्यानेकवाक्यार्थान्वयेनदीपकत्वा
पापत्याकारकंदीपकंप्रथमसमुच्चयप्रतिद्वंद्वीदं समाधिःकार्यसौकर्यंकारणांतरसंनिधेः उत्कंठितात्ततरुणीजगामास्तंचभानु
मान् यथावा मानमस्यानिराकर्तुंपादयोर्मेपतिष्यतः उपकारायदिष्ट्येतदुदितंघनगर्जितं केनचिदाशीक्षितस्यकार्यस्यकारणां ॐ ह्य
तरसन्निधानाघत्तौकर्यंतत्सम्यगाधानात्स

कानिबंधः कारकदीपकंनामालंकारः तदुक्तंसैवक्रियासुबह्वीषुकारकस्येतिदीपकमिति सैवस
कृद्वृत्तिः पश्यति सायं पृच्छतिमार्गं निद्रातीतिहे अब्धिकन्येप्रभूणामुद्घतदंडैर्द्वारि अधिकृतैर्द्वारपालैरित्यसकृद्वारितानत एवदीनानस्मान्सरसिरुह
रुचीनांपरमपरिचितैरपांगैः कटाक्षैः पश्येत्यन्वयः इतिकिं प्रभुर्निद्रातीत्यादि अंतः अंतः पुरे अक्षैः पाशैर्दीव्यतिक्रीडति भूयः पुनः छायासाहचर्यं मुख्यदीप

कस्य द्वीतप्रकारेणासमवाहितिमानः

प्रतिद्वंद्विविपरीतं इतिकारकदीपकालंकारः समाधिरिति कारणांतरसंनिधेर्वशात्कार्यस्य सुकरत्वं समाधिरलंकारः उत्कंठिता नायकसमीपं गंतुं मानमिति मा
नं निराकर्तुमस्याः पादयोः पतिष्यतो मम उपकाराय दिष्ट्या भाग्येनेदं घनगर्जितमुदीर्णमुन्नतमित्यन्वयः समुच्चये कारणानां तुल्यकक्षत्वमिह तु तद्विपरीतमतुल्
कक्षत्वमिति प्रतिद्वंद्वित्वं तत्रेत्यादिना दर्शितं इति समाध्यलंकारः ४॥ प्रत्यनीकमिति बलवतः शत्रोः पक्षे पक्षांतःपातिनि तदीये यः पराक्रमस्तत्प्रत्यनीकं नाम
लंकारः अनीकप्रतिनिधिरूपत्वात् जैत्रेति उत्पलाभ्यां स्वजयकारिनेत्रानुसारिणा कर्णाभ्यधःकृतौ तिरस्कृतौ अवतंसतया तदुपरिस्थितत्वादधस्तात्कृतौ

द्वितीयसमुच्चयप्रतिद्वंद्वी अयं समाधिः तत्र बहूनां प्रत्येकं समर्थानां खलेकपोतिकान्यायेन युगपत्कार्यसाधनत्वेनावतारः अत्र त्वेकेन का
र्ये समारब्धे अन्यस्य काकतालीयन्यायेनापतितस्य तत्सौकर्याधायकत्वमात्रं अत्रोदाहरणमुत्कंठितेति उत्कंठैव प्रियाभिसरणे पुष्क
लं कारणं नाथकारणमपेक्षते अत्याकूतो हि नारीणामकारणज्ञो मनोभव इति न्यायात् दैवादापततान्धकारेण तत्सौकर्यमात्रं कृ
तमिति एवं द्वितीयोदाहरणेपि योज्यं ४॥ प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः जैत्रनेत्रानुगौ कर्णौ वृत्पलाभ्यामधःकृतौ यथा वा म
मरूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति त्वमिमत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः एवं बलवति प्रतिपक्षे
प्रतिकर्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षपराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेन फलति यथा मधुव्रतो
घः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन बिंबसमाक्रम्य बलात्सुधांशोः कलंकसंके भ्रमवमातनोति कैमुत्येनार्थसंसिद्धिः काव्यार्थाप

विनिमेषः ममेति भुवि भूलोके मम रूपख्यातिं योऽहृतवान् तस्मिन्ननुप्रविष्टमनुरक्तं हृदयं यस्यास्तथानुप्रविष्टं हृदयं यस्यां वा तादृशीयमिति त्वयि मत्सरादिव
त्वनिश्चितं निरस्तदयो मदनस्तां क्षिणोति क्षीणां करोतीत्यन्वयः अत्र मत्सरादिवेति हेत्वंशे उत्प्रेक्षासत्त्वेपि तद्धेतुकप्रतिपक्षसंबंधिबाधनप्रत्यनीकान्नका
र सविविक्तो विषय इति बोध्यं अत एवमस्मत्कृतप्रदैरपि त्वं विनिर्जितमनोभवरूप सान्द्रसुंदर भवत्यनुरक्ता पंचभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव

तत्संनधिबाधनापेक्षयासाक्षात्तद्बाधने विशेषादितिभावः॥
कु. टी. एवं वहेन्नन्वेषस्यैव गतार्थत्वान्नेदमलंकारांतरं भवितुमर्हतीति कस्यचिद्वचनमनोदयं केमुतिकेति तत्संनधिबाधनापेक्षयासाक्षात्तद्बाधने विशेषादितिभावः॥ — सुधांशोर्विंबवलात्समाकृष्य तस्यांकेमध्यभागेकलंकभ्रमवमातनोतीत्यन्वयः इति
चं. ध्वेति अत्ररागः स्वकीयमधुप्रपारूपस्यपद्मस्यनिमीलनेन कुपितः सन् सुधांशोर्विंबवलात्समाकृष्य तस्यांकेमध्यभागेकलंकभ्रमवमातनोतीत्यन्वयः इति
६५ तस्यार्थान्तरालंकारः केमुत्येनांतकैमुत्यन्यायेनेत्यर्थः काव्येलंकाररूपार्थापत्तिः काव्यार्थापत्तिः दंडापूपिकेति दंडाकर्षणे तदवलंबिनामपूपानामाकर्षणं
पदयोर्यमिद्धंतहृदित्यर्थः व्यावर्तनायेतिलक्ष्यतावारणायेत्यर्थः अधरोयमितिवंधुजीवं वंधूकपुष्पंतत्प्रभाहरः वंधुभूतानांजीवानांप्रभाहरश्च ॥

सजितस्त्वन्मुखेनेंदुः कावार्तासरसीरुहां अत्रस इत्यनेनपद्मानियेनजिता नीतिविवक्षितंतथाचसोपियेनजितस्तेनपद्मानिजितानी
तिकिमुवक्तव्यमितिदंडापूपिकान्यायेनपद्मरूपस्यार्थस्यसंसिद्धिः काव्यार्थापत्तिः तांत्रिकाभिमतार्थापत्तिव्यावर्तनायकाव्येति
विशेषणं यथावा अधरोयमधीराक्ष्यावंधुजीवप्रभाहरः अन्यजीवप्रभाहरः अन्यजीवप्रभांहंतहरतीतिकिमद्भुतं स्वकी
यंहृदयंभित्वानिर्गतौयौपयोधरौ हृदयस्यान्यदीयस्यभेदनेकाकृपातयोः ॥ समर्थनीयस्यार्थस्यकाव्यलिंगंसमर्थनं॥
जितोसिमंदकंदर्पमच्चित्तेऽस्तित्रिलोचनः अत्रकंदर्पजयोपन्यासोदुष्करविषयत्वात्समर्थनसापेक्षः तस्यमच्चित्तेस्तित्रिलो
चनइतिस्वांतःकरणेशिवसन्निधानप्रदर्शनेनसमर्थनंकाव्यलिंगं व्याप्तिधर्मतासापेक्षनैयायिकलिंगव्यावर्तनायकाव्यवि,
शेषणे इदंवाक्यार्थहेतुकंकाव्यलिंगंपदार्थहेतुकं यथा भस्मोद्धूलनभद्रमस्तुभवतेरुद्राक्षमालेशुभंहासोपानपरंपरांगिरिसु

यत्वेतल्लक्षणमयुक्तं कैमुतिकन्यायस्यन्यूनार्थविषयत्वेनाधिकार्थापत्तावप्राप्तेः यथा तवाग्रेयदिदारिद्र्यंस्थितंभूपद्विजन्मनां शनैःसवितुरप्यग्रे
तमःस्यास्यत्यसंशयं अत्रयद्वेः शब्दमहिम्नाराजाग्रेदारिद्र्यस्थित्यपेक्षयासूर्याग्रेतमोवस्थानंदुःशकमेवेत्यवगतमपिन्यायसाम्यादापाद्यते ननु ७८
कैमुतिकन्यायेनेतिकेचिदुक्तंतत्रेदंवक्तव्यंकेनविदर्थेनतुल्यन्यायत्वादर्थांतरस्यापत्तिरर्थापत्तिरिति तदुक्तलक्षणमयुक्तं कावार्तासरसिरुहामित्या

मुसन्यायविषयार्थापत्तावप्याप्तेः कैमुतिकन्यायस्य न्यूनार्थविषयत्वेन तुल्यन्यायत्वाभावादापादनाप्रतीतेश्चेति न चात्र कैमुत्यन्यायतामात्रं नत्वलंकारत्वमिति
युक्तं अलंकारतत्त्वाभियुक्तानां प्राचीनानां भूयस्त्वदर्शनतया अपामरणसंभावयितुमशक्यत्वात् लोकव्यवहारेऽपि कैमुत्यन्यायस्य चमत्कारित्वानुभवेन तेनै
वन्यायेन तस्यालंकारतासिद्धेश्च इत्थं च तदुक्तार्थाय सुदाहरणे वक्ष्यमाणः संभावनालंकारो योऽन्यैर्यद्यर्थोक्तौ च कल्पनमिति यद्यर्थातिशयोक्तित्वेनो
क्तः यद्यर्थातिशयोक्तावापाद्यापादकयोर्विपरीतार्थोविश्रान्तत्वमिह त्वापादकस्य सिद्धत्वमापाद्यस्य संभाव्यमानत्वमिति वैचित्र्यं नु तदवान्तरभेदता

आराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनाम्नि महामोहे निलीयामहे अत्र मोक्षस्य महामोहत्वमप्र
सिद्धमिति तत्समर्थने सुखालोकोच्छेदिनीति पदार्थो हेतुः क्वचित्पदार्थवाक्यार्थौ परस्परसापेक्षौ हेतुभावं भजतः यथा वा चिकुरप्र
करा जयन्ति ते विदुषी मूर्द्धनि यान्बिभर्ति सा पशुनाप्यपुरस्कृतेन ततुलनामिच्छतु चामरेण कः अत्र चामरस्य दमयन्तीकुन्तलभार
साम्याभावे विदुषी मूर्द्धनि यान्बिभर्तीति वाक्यार्थः पशुनाप्यपुरस्कृतेनेति पदार्थश्चेत्युभयं मिलितं हेतुः क्वचित्समर्थनीयार्थस
मर्थनार्थो वाक्यार्थपदार्थौ हेतुः यथा वा वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न क्वापि क्वचिदपि भवन्तं प्रणतवान् नम
न्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमानितीश क्षन्तव्यं तदिदमपराधद्वयमपि अत्र तावदपराधद्वयं समर्थनीयं अस्य स्पष्टार्थत्वात् तत्स
मर्थनं च पूर्वापरजन्मनोरनमनाभ्यां वाक्यार्थभूताभ्यां क्रियते अत्र द्वितीयवाक्यार्थः तनुत्वमेकपदार्थो हेतुः अत्रापि संप्रति नमन्मु
क्त इति वाक्यार्थेनैकपदा

पाः साधकं न तु तद्बहिर्भूततया इति न तत्राप्याशङ्काऽपीत्यलं विस्तरेण इत्यर्थापत्तिः समर्थनीयस्येति समर्थनापेक्षस्यार्थस्य
समर्थनं काव्यलिङ्गमलंकारः अर्थान्तरन्यासवारणाय समर्थनापेक्षस्येति यदा त्वर्थान्तरन्यासप्रकरणे वक्ष्यमाणरीत्या सामान्यविशेषभावातिरिक्तत्वं निवेश्यते
तदानोपादेयमेवेदमिति बोध्यं दुष्करविषयत्वात् दुष्करविषयरूपत्वात् समर्थनापेक्षस्येत्यनन्तरमर्थस्येति शेषः नैयायिकेति नैयायिकाभिमतलिङ्गस्य रू

कु॰ टी॰ भस्मोद्धूलनेति संबोधनं शुभमस्त्विति शेषः ५ गिरिसुताकान्तस्य शिवस्यालयः प्रासादस्तदलंकारभूते सोपानपङ्क्तेऽइत्यपि संबोधने हेतिदैन्येविभुनाप्रभुणा शिवेन॥
चं॰ युष्माकं या सपर्या पूजा तत्सुखस्यालोकः प्रकाशस्तदुच्छेदके निलीयामहे वयमित्यर्थात् चिकुरेति चिकुरप्रकराः केशकपाशाः विदुषीयं डिन्नामादमयन्ती अ
६५ पुरस्कृतेन अनादृतेन पुरोभागे अनिहितेन च पदार्थश्च अनेकपदार्थश्च वपुरिति पुरा पूर्वस्मिन् कापि जन्मनि क्वचिदपि क्षणं भवं तं न प्रणतवान् इतीदं व
पुषः शरीरस्य प्रादुर्भावादनुमितं संप्रतिनमन् नतिं कुर्वन् मुक्तः अतनुरशरीरः अहमग्रेप्यनतिमान्नतिरहितः समर्थनीयं हेतुकथनेनोपपादनीयं ॥

क्वचित्परस्परविरुद्धयोः समर्थनीययोरुभयोः क्रमाद्भिर्हेतुभावं भजतः यथा ८॥ असोढा तत्कालोल्लसदसहभावस्य तपसः कथा
नां विस्रम्भेष्वथ च रसिकः शैलदुहितुः प्रमोदं वो दिश्यात्कपटवटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः अत्र शि
वस्य युगपत्कृत्रिमब्रह्मचर्यवेषापनयनत्वरादनुवर्तनेच्छयोर्विरुद्धयोः क्रमाद्गिरिजातीव्रतपसोसहिष्णुत्वं तत्संलापकौतुकं
चेत्युभावर्थौ हेतुत्वेन निबद्धौ क्वचित्परस्परविरुद्धयोरुभयोः समर्थनीययोरेक एव हेतुः यथा जीयादम्बुधितनयाधररसमा
स्वादयन् मुरारिरयं अम्बुधिमथनक्लेशं कलयन् विफलं च अत्र विफलत्वसफलत्वकलनयोरुभयोर्विरुद्धयोरेक एवाम्बु
धितनयाधररसास्वादो हेतुः इदं काव्यलिंगहेत्वलंकारद्वितिके चिद्भ्राजहुः हे गोदावरि देवतावकतटोद्देशे कलिंगः कविर्वाग
देवी वह्नुदेशदर्शनसखीं त्यक्त्वा विरक्तिं गतः एनामर्णवमध्यसुप्तसुरभिन्नाभीसरोजासनं ब्रह्माणं गमयक्षितौ कथमसावेकाकि

अस्पष्टार्थत्वात् अस्पष्टहेतुकत्वात् अत्र अनयोर्वाक्यार्थयोर्मध्ये द्वितीयवाक्यार्थे अग्रेप्यनतिमानिति वाक्यार्थे अत्रापि अतनुत्वेपि न मन्मुक्तत्वस्या
वाक्यात्वादाह अनेकपदार्थो वेति असोढेति तपस्यन्तीमुमां प्रति वटुवेषेणागतस्य हरस्य वर्णनं ८॥ कपटेन योऽवटो ब्रह्मचारिणो वेषस्तस्यापनयने त्वरा गेत्वरा
शैथिल्याभ्यां युगपदभियुक्तः आक्रान्तः त्वराशैथिल्यहेतुगर्भं क्रमेण विशेषणद्वयमाह तत्काले उल्लसन् प्रादुर्भवन् सहभावोदुः सहत्वं यथात् गौर्या यस्य

नीस्थास्यतिद्रूसत्रवस्त्रणः

तादृशस्यतपसः असोढा सहनासमर्थः

षेत्सकन्यायाः कथानां विस्रंभेषु विश्वासेषु रांभकश्चेति ब्रह्मचर्यं ब्रह्मचारिवेषः जीयादिति अंबुधेस्तनयायालक्ष्म्या अधरः समास्वादयन्नपंमुरारिर्जीयात् स
वोत्कर्षेण वर्त्तेतां कीदृशः समुद्रमथनक्लेशाएवं विधांगनालाभात्फलंकलयन्जानन् एतदधरमाधुर्येसत्यमृतस्यवैयर्थ्यात्हि फलंचकलयन्नित्यर्थः हेगाद
वरीत्यत्रार्णवमध्येत्यादिब्रह्मविशेषणस्यन्यसनेश्लेषाख्योगुणइति जयदेवेनोक्तमित्यन्वयः तावकतटोद्देशेत्वदीयतीरभूमौकलिंगाख्यः कविः वहूना
देशानांदर्शनेसहचारिणीं विरतिंमुक्तिं एनांसरस्वतीं ब्रह्माणंप्रातगमयन येतिसंबंधः कीदृशं अर्णवमध्येस्फुरत्पोमुरभिन्मुरारिस्तन्नाभिकमलस्थंश्ले

प्रायणं कथंगोदावर्याकर्त्तव्यमिदसंभाविनीपार्थोपपादकस्यार्णवमध्येत्यादितद्विशेषणस्यन्यसनंश्लेषाख्योगुणइति श्लेषावि
घटमानार्थघटकार्थस्यवर्णनमितिश्लेषलक्षणमितिच जयदेवेनोक्तं वस्तुतस्त्वत्रापिपदार्थहेतुकंकाव्यलिंगमेवतद्भेदकाभा
वात् ननुसाभिप्रायपदार्थवाक्यार्थविन्यासनरूपात्परिकरात्काव्यलिंगस्यकिंभेदकं ॱ उच्यते परिकरेपदार्थवाक्यार्थवलात्प्रती
यमानार्थौवाच्योपस्कारकतांभजतः काव्यलिंगेतुपदार्थवाक्यार्थौवेवहेतुभावंभजतः ननुयद्यपिस्फुरत्वालोकोच्छेदिनीत्यादिपदा
र्थहेतुककाव्यलिंगोदाहरणेऽश्रीयमानतिमानित्यादिवाक्यार्थहेतुककाव्यलिंगोदाहरणेचपदार्थवाक्यार्थावेवहेतुभावंभजतस्त
थापिपप्रभुनाप्युपरस्कृतेनेतिपदार्थहेतुकोदाहरणेमच्चित्तेस्तिस्त्रिलोचनइतिवाक्यार्थहेतुकोदाहरणेचप्रतीयमानार्थस्यापिहेतु
त्वेऽनुप्रवेशोदृश्यते पप्रभुनेतिह्यविवेकत्वाभिप्रायगर्भे विदुषीत्यस्यप्रतिनिर्देशत्वात्त्रिलोचनइतिचकंदर्पदाहकतृतीयलोचन
                                                                                                                          नत्वाभिप्रायगर्भेकंदर्पजयोपयोगित्वात्तस्याः स

षाः विघटमानेत्यत्राकारप्रश्लेषः अविद्यमानस्यानुपपद्यमानस्यार्थस्यघटकउपपादकोयोऽर्थस्त
स्यवर्णनंश्लेषाख्योगुणइत्यर्थः पदार्थहेतुकं समस्तपदार्थहेतुकं पदार्थवाक्यार्थेतिद्वंद्वः प्रतीयमानोर्थः व्यंग्योर्थः प्रतिनिर्देशत्वादिति निर्दिश्यते ॱ उच्चार्यतेऽ
त्ति निर्देशः शब्दः तेनविपरीतार्थकशब्दत्वादित्यर्थः तस्य तादृशतृतीयलोचनत्वस्य तथाचोभयत्रपरिकरालंकारसत्वात्काव्यलिंगोदाहरणत्वमनुपपन्नमितिभा

तयोः प्रभुनेत्याद्युक्तोदाहरणयोः तदुत्थापितं परिकरोपपादितं व्यङ्ग्यस्य हेतुकोटावेवानुप्रवेशादिति भावः एवदेव विवृणोति प्रतीयमानेति वाच्यस्येवेत्येवकारसूचितं व्यङ्ग्यद्वारकत्वं न हीत्यादिना विवृतं तदयमर्थः यदि प्रभ्वादिपदव्यङ्ग्यकेशपाशसाम्याभावादर्थस्य साक्षादुपपादकं स्यात्तदात्र परिकर एव स्यान्न काव्यलिङ्गं न त्वेवमस्ति प्रभुपदप्रतीताविवेकित्वमात्रेण साम्याभावस्योपपादनासंभवात् किं तु तद्विशिष्टप्रभुपुरस्कृतत्वाभावा एव साक्षादुपपादक इति तत्कोटिनिविष्टव्यङ्ग्यं काव्यलिङ्गरूपस्य तस्याङ्गमेव व्यङ्ग्यान्तरं तु नोक्तकाव्यलिङ्गगम्यमर्थोपपादकमस्तीति निराबाधमेव काव्यलिङ्गमिति ननु स्वयम

परिकर एव किं तु तदुत्थापितकाव्यलिङ्गमपि प्रतीयमानाविवेकविशिष्टेन प्रभुनाप्यपुरस्कृतत्वस्यानेकपदार्थस्य प्रतीयमानकंदर्पदाहकतृतीयलोचनविशिष्टस्य शिवस्य चित्ते सन्निधानस्य च वाक्यार्थस्य वाच्यस्येव हेतुभावात् न हि तयोर्वाच्ययोर्हेतुभावे ताभ्यां प्रतीयमानं मध्ये किंचिद्द्वारमस्ति यथा सर्वाशुचिनिधानस्येत्यादिपदार्थपरिकरोदाहरणे सर्वाशुचिनिधानस्येत्यादिनानेकपदार्थेन प्रतीयमानं शरीरस्यासंरक्षणीयत्वं तथा च वाक्यार्थपरिकरोदाहरणे पर्यायोक्तविधया तत्तद्वाक्यार्थेन प्रतीयमानेनाहं व्यास इत्यादि तस्मात्प्रभुनेत्यत्र त्रिलोचन इत्यत्र च प्रतीयमाने वाच्यस्येव पदार्थस्य वाक्यार्थस्य च हेतुभावोपपादकतया काव्यलिङ्गस्याङ्गमेव २॥ यथा यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरमित्यनेकवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे त्वन्नेत्रसमानकान्तीत्यादिकानिन्दीवरशशिहंसविशेषणानि तेषां वाक्यार्थानां हेतुभावोपपादकानीति तत्र वाक्यार्थहेतुककाव्यलिङ्गे पदार्थहेतुककाव्यलिङ्गमङ्गमिति न तयोः

रोपपादकस्य काव्यलिङ्गस्याप्युपपादकं क्वचिद्दृष्टमित्याशयेनोदाहरति २ यत्त्वन्नेत्रेति एतत्प्रतीपालंकारे प्रागुदाहृतं अनेकवाक्यार्थहेतुकेति पूर्वपादत्रयवाक्यार्थत्रयस्य चतुर्थपादार्थे हेतुत्वमिति ज्ञेयं हेतुभावोपपादकानीति इन्दीवरस्य नेत्रसमानकान्तित्वं विना पद्मादेरिव तद्दर्शनस्य दैवगतकान्तासादृश्यविनोदासहिष्णुत्वे हेतुत्वासंभवादिति भावः समाहितमर्थमुपसंहरति इतीति तयोः प्रभुनापीति मन्वितेस्त्रीत्यत्र तयोः इति काव्यलिङ्गालंकारः प्रस्तुतव्यञ्जकतयेति ॥

अप्रस्तुताभिधानं युज्यत इत्यनुषज्यते एवमग्रेपि विस्रब्धेति खलस्य विश्वस्तघातरूपो दोषः स्वस्यैव वधाय भवतीत्यतो वीराणां कोपकारकः सिंहनिद्रापहारी नवतरु
भंगजन्यध्वनिः करिणो वधाय यथेत्यर्थः तद्दर्शनात् उपमानत्वादर्शनात् ॥ ननु महापुरुषाकृतिरियं गभीरेयमस्याकृतिरित्यादौ सामान्यस्याप्युपमानतादृष्टेत्यरु
चेराह उपमानतेति इवाद्यभावात् तात्पर्याभावाच्च उपमानतयाऽन्वयस्य सामंजस्येनाप्रतीतेरित्यर्थः इहापीत्यपिना काव्यलिंगसमुच्चयः प्रतीतिवैभवात् प्रतीति

काव्यलिंगोदाहरणत्वेकाचिदनुपपत्तिः उक्तिरर्थांतरन्यासः स्यात्सामान्यविशेषयोः हनुमानब्धिमतरद्दुष्करं किं महात्मनां गुणवद्वस्तु
संसर्गाद्याति स्वल्पोपि गौरवं पुष्पमालानुषंगेन सूत्रं शिरसि धार्यते सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थांतरन्यासस्तयोश्चैकं प्रस्तुतं अ
न्यदप्रस्तुतं भवति ततश्च विशेषे प्रस्तुते तेन सहाप्रस्तुतसामान्यरूपस्य सामान्ये प्रस्तुते तेन सहाप्रस्तुतविशेषरूपस्यार्थांतरस्यन्यसन
मर्थांतरन्यास इत्युक्तं भवति तत्राद्यस्य द्वितीयाद्धमुदाहरणं द्वितीयस्य द्वितीयश्लोकः नन्वयं काव्यलिंगान्नातिरिच्यते तथाहि उदाहरण
द्वयेप्यप्रस्तुतयोः सामान्यविशेषयोरुक्तिः प्रस्तुतयोर्विशेषसामान्ययोः कथमुपकारोतीति विवेक्तव्यं नहि सर्वथैवाप्रस्तुतानन्वय्यप्रस्तुताभि
धानं युज्यते न तावदप्रस्तुतप्रशंसापामिवप्रस्तुतव्यंजकतया प्रस्तुतयोरपि विशेषसामान्ययोः स्वशब्दोपात्तत्वान्नाप्यनुमानालंकारइ
वप्रस्तुतप्रतीतिजनकतया तद्धि दिह व्याप्तिपक्षधर्मताद्यभावात् नापि दृष्टांतालंकार इव उपमानतया विस्रब्धघातदोषः स्ववधाय ख
लस्य वीरकोपकरः नवतरुभंगध्वनिरिव हरिनिद्रातस्करः करिण इत्यादिषु सामान्ये विशेषस्योपमानत्वदर्शनेपि विशेषे सामान्यस्य
क्वचिदपि तदर्शनात् ॥ उपमानतया तदन्वये सामंजस्याप्रतीतेश्च तस्मात् प्रस्तुतसमर्थकतयैवाप्रस्तुतस्योपयोग इहापि वक्तव्यः

तादर्थ्यलूपप्रयोजनवशात् प्रयोजनस्यापि हेतुत्वविवक्षया पंचमी उक्तं वैलक्षण्यमुदाहरणनिष्ठतयादर्शयति नहीत्यादिना इत्यादिकाव्यलिंगोदाहरणेष्विव अथा
साद्यर्थांतरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनार्थित्वं नह्यस्तीति संबंधः शारदा रात्रां के उपगृढे स्याल्लिंगितेसति अथानंतरं शांतास्तडिद्रूपाः कटाक्षाय स्याः साध्य

रसगंगाधर

उक्तेविशेषरूपमर्थंसामान्यरूपेणार्थांतरेणसमर्थयन्ति परिभ्रष्टपयोधराणांकासामंगनानांसौभाग्यगुणोननष्टइतिपयोधराःकुचामेघाश्च दिवाकरादितिा
कुमारसंभवेहिमालयवर्णने योहिमालयःममत्वं मदीयतावद्धिशिरोमस्तकं शिखरंचसमर्थनार्थितं समर्थनापेक्षत्व अयं अर्थांतरन्यासेसमर्थना
मपेक्षत्वरूपःसामान्यस्येदस्यबुद्धौप्रतिष्ठितत्वासंभवादित्यनेनान्वयः २ संप्रतिपन्नेति वक्तृश्रोतृसंमतेत्यर्थः विशेषावतरणंविशेषावगमंतत्र वं॰

ततश्चवाक्यार्थहेतुकंकाव्यलिंगमेवात्रापिस्यान्नत्वलंकारांतरस्यावकाशइतिचेत् अत्रकेचित्समर्थनसापेक्षस्यार्थस्यसमर्थने
काव्यलिंगंनिरपेक्षस्यापिप्रतीतिवैभवात् समर्थनेऽर्थांतरन्यासः नहियत्वन्नेत्रसमानकांतीत्यादिकाव्यलिंगोदाहरणेष्विव अ
र्थोपगूढेशरदाशशांकेप्रादुरयोशांततडित् कटाक्षा कासांनसौभाग्यगुणोंगनानांनष्टःपरिभ्रष्टपयोधराणां दिवाकराद्रक्ष॰
तियोगुहास्वलीनंदिवाभीतमिवांधकारं क्षुद्रेपिनूनंशरणंप्रपन्नेममत्वमुच्चैःशिरसामतीव इत्याद्यर्थांतरन्यासोदाहरणेषु
प्रस्तुतस्यसमर्थनापेक्षत्वमस्तीति वस्तुतस्तुप्रायेवाद्दोयं अर्थांतरन्यासेपिहिविशेषस्यसामान्येनसमर्थनानपेक्षत्वेपिसा
मान्यविशेषेणसमर्थनमपेक्षतएवनिर्विशेषंनसामान्यमितिन्यायेन वहूनामप्यसाराणांसंयोगःकार्यसाधकइत्यादिसामा
न्यस्य तृणैरारभ्यतेरज्जुस्तयानागोपिवध्यतइत्यादिसंप्रतिपन्नविशेषावतरणंविनाबुद्धौप्रतिष्ठितत्वासंभवात् ४ ॥नरः ता॰
त्रसामान्यस्यकासांनसौभाग्यगुणोंगनानामित्यादिविशेषसमर्थनार्थसामान्यस्यैवलोकसंप्रतिपन्नतयाविशेषावतरणंविनैव
बुद्धौप्रतिष्ठितत्वसंभवतीतिश्लोकेतन्न्यसनंनापेक्षितमस्तीतिवाच्यं सामान्यस्यसर्वत्रलोकसंप्रतिपन्नत्वनियमाभावात् ॥

द्गनामित्यादौसामान्यस्येतिविशेषावतरणंविनैवबुद्धौप्रतिष्ठितत्वंसंभवतीत्यग्रिमेणान्वितं तन्न्यसनं तृणैरित्यादिविशेषन्यसनं नन्वेवमप्यर्थांतरन्यासे
क्वचिदेवसमर्थनापेक्षा काव्यलिंगेतुसर्वत्रेत्युक्तभेदइन्याशंक्याहकिंचेति कविकुलक्षुण्णत्वेनकविसमूहाभ्यस्तत्वेन तदास्यदास्येनलमुखदास्य पूर्वंणिपूर्णि

कु॰ टी॰
चं॰
६८

तडेश्च लडयोरभेदात् अधिरूढे आक्रांते सति विद्यमानगतिः सगतिकः वुद्धिमांश्चकः आसितुं स्थातुं उत्सहेत शक्नुयात् यस्मात् मिमंक्षोर्मज्जनं कर्तुमि

च्छोर्दंतिनो गजस्य कठोगेडएव कटाहस्तस्य तटाद्‌ग्राद्दलीनां पटलैः समूहैः परितोमंक्षु शीघ्रं उदयाति उत्पतितमित्यन्वयः अत्रापि पूर्वोर्द्धोक्तमप्रकृतसा

मान्यमुत्तरार्द्धोक्तेन प्रकृतेन विशेषेण समर्थितम् इत्यर्थांतरन्यासालंकार यस्मिन्निति यस्मिन्काव्ये इत्यर्थात् निवध्यत इति शेषः समर्थ्यसमर्थकभा

वापन्नत्वं तु न लक्षणे निवेशनीयं तद्विना चमत्काराभावेनचमत्कारित्वविशेषणेनावश्यवक्तव्येनैवानतिप्रसंगात् एवमेवार्थांतरन्यासलक्षणेपिवोध्य

किंतु समर्थ्यसमर्थकयोः सामान्यविशेषसंबंधेऽर्थांतरन्यासस्तदितरसंबंधे काव्यलिंगमित्येवव्यवस्थावधारणीया प्रपंचश्चित्रमी

मांसायां द्रष्टव्यः एवमप्रकृतेन प्रकृतसमर्थनमुदाहृतं प्रकृतेनाप्रकृतसमर्थनं यथा यदुच्यते पार्वतियापदृत्तयेन रूपमित्यव्यभि

चारितद्वचः तथाहितेशीलमुदारदर्शने तपस्विनामप्युपदेशतांगतं यथा वा दानंददत्यपिजलैः सहसाधिरूढेकोविद्यमानगति

रासितुमुत्सहेत यद्दंतिनः कटकटाहतटान्मिमंक्षोर्मंक्षूदयातिपरितः पटलैरलीनां यस्मिन्विशेषसामान्यविशेषाः सविकस्वरः स

नजिग्योमहांतोहिदुर्द्धर्षासागराइव ९ यत्रकस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावपिअपरितुष्यता कवि

नातत्समर्थनायपुनर्विशेषांतरमुपमानरीत्यार्थांतरन्यासविधयावाविन्यस्यते तत्रविकस्वरालंकारः उत्तरार्धंयथाकथंचिदुदाहर

णं इदंतुव्यक्तमुदाहरणं अनंतरत्नप्रभवस्ययस्य हिमंन सौभाग्यविलोपिजातं एकोहिदोषोगुणसन्निपाते निमज्जतींदोः किरणे

हिं ति ह्र

म् सनेति सप्रकृतोराजानजिग्येनजितोऽर्थात्परैरितिविशेषः प्रकृतः तत्समर्थनंमहांतोहिदुर्धर्षा अनाक्रमणीयाइतिसामान्येन तस्यापिऽसागराइवेतिविशे

षोपमर्पेतिज्ञेयं ९ प्रसिद्धेरल्पत्वात्तत्रापरितोषोवोध्यः यथाकथंचिदिति महतामनाक्रमणीयत्वस्यातिप्रसिद्धत्वेन तत्समर्थनापेक्षाभावाच्चंद्रालोकगतमेत

न्नसमंजसमितिभावः इदंवक्ष्यमाणव्यक्तमिति गुणसमुदायेएकस्यदोषस्यानाकलनमनतिप्रसिद्धंतयासमर्थनापेक्षमिंदोरित्यादिविशेषेणसमर्थ्यतइत्यत

स्फुरमित्यर्थः कर्णेति हे काक कर्णयारुंतुदं पीडाजनकं रणितं शब्दितं अंतरेणविनास्वयं मकरंदः पुष्परसस्तच्छालिनं माकंदमाम्रवृक्षं गाहस्व आश्रय इहाम्रतरौ
लावण्यं कोकिलं मन्महे जानीमहे यतः स्थलवैभवेन स्थानमाहात्म्येन कति विहङ्गस्तूनि धन्यानि भवंतीति सामान्येन पूर्वोक्तविशेषसमर्थनं अत्रापि तदा कांक्षा
यां विशेषरूपमर्थांतरं न्यस्यति नेपालभूमिपालस्य भाले पतितेन पंकेन कस्तूरिकां कांनशंके तापि तु सर्वइति मालिन्यमिति मधुलिट् भ्रमरः कलंकश्चैतौ अज्ञश
शिनो मालिन्यं घत्तः कुरुतः नवमुखे तु दृक् च निकांजनं च नयोराभासाभो घत्त इत्यनुज्ञाते अंजनाभेइति पाठे द्वितीया द्विवचनं उक्तमर्थं सामान्येन समर्थयति

इदमुपमानरीत्या विशेषांतरस्यान्यसने उदाहरणं अर्थांतरन्यासविषयया यथा कर्णारुंतुदमंतरेण रणितं गाहस्व काक स्वयं माकंदम
करंदशालिनमिह त्वां मन्महे कोकिलं धन्यानि स्थलवैभवेन कति विहङ्गस्तूनि कस्तूरिकां नेपालक्षितिपालभालपतितेपंकेन शंके
तकः मालिन्यमज्ञशशिनोर्मधुलिट्कलंकौ धत्तां मुखे तु तव दृक्तिलकांजनाभां दोषावितः क्वचन मेलनतो गुणत्वं वक्तुर्गुणौ हि
वचसि भ्रमविप्रलंभौ ॥ १८ ॥ प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पनं कचाः कलिंदजातीरतमालस्तोममेचकाः कार्यातिशयाहेतौ तद्धेतुत्वप्रक
ल्पनं प्रौढोक्तिः यथा तमालगतनैल्यातिशयाहेतौ यमुनातटरोहणे तद्धेतुत्वप्रकल्पनं यथा वा कल्पतरुकामदोग्ध्रीचिंतामणिधन
शेखानां रचितो रजोभरपयस्तेजः श्वासांतरांबरैरेषः अत्र कल्पवृक्षाद्यैकैकवितरणातिशायिवर्णनीयराजवितरणातिशयाहेतौ
कल्पवृक्षपरागादिरूपपंचभूतनिर्मितत्वेन तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः संभावनायदीत्थं स्यादित्यूहोन्यस्य सिद्धये यदि शेषो भवेद्व

दोषावपि क्वचित् मेलनतो मिथो मिलनात् गुणत्वं इतः प्राप्नुत इति कथमेतत्तत्राह हि यतः वक्तुर्वचसि भ्रमविप्रलं ॥ १९ ॥ क्ता कथिताः स्युर्गुणास्तव यथा वा
भौ भ्रांति प्रतारणे गुणौ भवतः घटवति घटाभावनिर्णीयपरप्रतारणाय घटोस्तीति प्रयुक्तवाक्यप्रमाजनकत्वात्तयोर्गुणत्वमिति भावः इति विकस्वरालंकारः ॥ १८ ॥
प्रौढोक्तिरिति उत्कर्षस्याहेतावुत्कर्षहेतुत्वकल्पनं प्रौढोक्तिः कलिंदजा यमुना स्तोमः समूहः मेचकाः श्यामाः रोहणे उद्भवे कल्पेति एष राजा कल्पवृक्षादीनां

क्रमेण रजोभरादिभिः पंचभिर्भूतै रचित इत्यन्वयः

धनदः कुबेरः शंखो निधिविशेषः रजोभरः परागसमूहः पयो दुग्धं प्रवासः प्रसिद्धः अंतरांतरं यां खाभ्यंतरमाकाशं अतिशायीत्यग्रिमवितरणेनान्वितं अ
हं नो पंचनिर्मितत्वं इति सामानाधिकरण्येनान्वयः इति प्रौढोक्तिः संभावनेति ऊहस्तर्कः कस्तूरिकेति अहं यदि मृष्टिकर्त्ता स्यां तदा कस्तूरिकामृगाणामं
डादखिलं गंधस्वगुणमादाय खलजिह्वायां निवेशयिष्यामीत्यन्वयः इति संभावना किंचिदिति कस्यचिदर्थस्य मिथ्यात्वसिध्यर्थं मिथ्याभूतार्थांतर
कल्पनं मिथ्याध्यवसितिरलंकारः वेश्यामित्युदाहरणे खस्रजं गगनमालां अनेन खपुष्पमालाधारणमिव वेश्यावशीकरणमिति निदर्शनापि बोध्या अ

कस्तूरिकामृगाणामंडाद्गंधगुणमखिलमादाय यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि यद्यर्थोक्तौ च कल्पनम्॥ ति
शायोक्तिभेद इति काव्यप्रकाशकारः किंचिन्मिथ्यात्वसिध्यर्थं मिथ्यार्थांतरकल्पनं मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन्
अत्र वेश्यावशीकरणस्यासंताऽसंभावितत्वसिद्धये गगनकुसुममालिकाधारणरूपार्थांतरकल्पनं मिथ्याध्यवसितिः यथा वा अ
स्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः गीयंते स्वरमष्टमं कलयता जा
तेन वंध्योदरान्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोदसि ॥ अत्राद्योदाहरणं निदर्शनागर्भं द्वितीयं तु शुद्धं असंबंधे संबंधरू
पातिशयोक्तितो मिथ्याध्यवसितेः किंचिन्मिथ्यात्वसिध्यर्थं मिथ्यार्थांतरकल्पनात्मना विच्छित्तिविशेषेण भेदः वर्ण्यं स्याद्वर्ण्यवृत्तां
तप्रतिबिंबस्य वर्णनं ललितं निर्गते नीरे सेतुमेषा चिकीर्षति प्रस्तुते धर्मिणि यो वर्णनीयो वृत्तांतस्तमवर्णयित्वा तत्रैव तत्प्रतिबिंबरू
पस्य कस्यचिदप्रस्तुतवृत्तांतस्य वर्णनं ललितं यथा
स्येति परार्धपरया परार्द्धसंख्यामतिक्रांतया लक्षीकृता उपलक्षिताः प्रज्ञाचक्षुषा अंधेनावेक्ष्य
माणाश्च ता बधिरश्राव्याश्चेति कर्मधारयः कलयता कुर्वता प्रकरेण समूहेन कूर्मरमणीक्षुपी रोधसि तीरे मिथ्याध्यवसितेरित्यस्य भेद इत्यत्रान्वयः ॥ कल्प
नाविच्छित्तिविशेषेण कल्पनाप्रयुक्तविच्छित्तिविशेषेण कल्पनात्मनेति पाठे कल्पनास्वरूपेणेत्यर्थः उपधेयसंकरेऽप्युपाधेरसंकरात् विच्छित्तिविशेषेणेति वतसे

विच्छित्तिर्विशेषोयस्मादितिविच्छित्तिविशेषपतिमावर्त्तयतीतिवाभ्युत्यतेः एतेनप्रौढोक्तावगतार्थतामाचक्षाणा निरस्ताविदितव्याः नचमिथ्याध्यवसितेरलंका
रान्तरत्वे हरिश्चन्द्रेणसंजप्ताः प्रगीताधर्मस्तनुना खेलतिनिगमोत्संगेमातंगेगे गुणास्तवेत्यादोहरिश्चन्द्रादिसंबंधाद्गुणानांसत्यताप्रतीतेः सत्याध्यवसितिरपि
तथास्यादितिवाच्यं सत्यताप्रतीत्यर्थंकस्याप्यर्थस्यकविप्रतिभाकल्पितत्वाभावेनशब्दमात्रेणालंकारतायाः असंभवात् कविप्रतिभामात्रकल्पिताअर्थाः
काव्येऽलंकारपदास्पदमितिविषमालंकारप्रकरणेत्वयैवाभिधानादित्यलंविस्तरेण इतिमिथ्याध्यवसितिः प्रस्तुतइति ललितमितिलक्ष्यनिर्देशः निर्गत

कयंचिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकांतरासक्तनायकानयनार्थंसखींप्रेषयितुकामांनायिकामुद्दिश्यसख्या
ववनेनतद्व्यापारप्रतिबिंबभूतगतजलसेतुबंधवर्णनं नेयमप्रस्तुतप्रशंसा प्रस्तुतधर्मिकत्वात् नापिसमासोक्तिः प्रस्तुतवृत्तांतेवर्ण्य
मानेविशेषणसाधारण्येनसारूप्येणवाऽप्रस्तुतवृत्तांतस्फूर्त्यभावात् अप्रस्तुतवृत्तांतादेवसरूपादिह प्रस्तुतवृत्तांतस्यगम्यत्वात्
नापिनिदर्शना प्रस्तुताप्रस्तुतवृत्तांतयोः शब्दोपात्तयोरैक्यसमारोपएवतस्याः समुन्मेषात् ॰ यदिविषयविषयिणोः शब्दोपात्त
योःप्रवर्त्तमानएवालंकारोविषयिमात्रोपादानेपिस्यात् तदारूपकमेवभेदेप्यभेदरूपाया अतिशयोक्तेरपिविषयमाक्रमेत् ननु
तर्हिंअत्रप्रस्तुतनायकादिनिगरणेनतत्रशब्दोपात्ताप्रस्तुतनोरद्यभेदाध्यवसायइतिभेदेऽभेदरूपातिशयोक्तिरस्तु एवंतर्हिसा
रूप्यनिबंधनाऽप्रस्तुतप्रशंसाविषयेपिसैवातिशयोक्तिःस्यात् अप्रस्तुतधर्मिकत्वान्नभवतीतिचेत् ॥ ॥

इत्युदाहरणं दाक्षिण्येत्यादितप्रत्ययांतचतुष्टयंनायकविशेषणं दाक्षिण्यं अनुरोधशीलत्वं तद्व्यापारेति सखीप्रेषणरूपनायिकाव्यापारसरूपेत्यर्थः सारूप्य
चात्रनैरर्थक्यं क्रमालंकारेऽन्तर्भावमाशंक्यनिराकरोतिनेयमित्यादिना प्रस्तुताप्रस्तुतेति तयाचप्रकृतेः प्रस्तुतवृत्तांतस्यैकस्यैवोपादानान्निदर्शनानयुक्तेति
भावः ॰ ननूभयोः शब्दोपात्तत्वइवाप्रस्तुतमात्रस्यतत्वेपिनिदर्शनास्त्वित्याशंक्याह यदिति प्रतिवद्याताववत्परिहरति तर्हिसारूप्येति एकः ॥ ॥

कृतीषाकुंतेषु योन्यं शकान्त याचत इत्यादाविव्यर्थः अप्रस्तुतस्य शाकुंतादेस्तत्रवर्णनीयत्वादतिशयोक्तिस्थलं च वापीत्वादौ वापीत्वादिना प्रस्तुतनाभ्यादेर्वे र्णयत्वान्नातिशयोक्तिस्तत्र्यापादयितुं शक्येति भावः अप्रसिद्धोपहेतुरित्याह तत्रेति प्रसिद्धेति चापीकायीत्यादि सर्वं संमतेत्यर्थः तद्गतेति प्रस्तुतगतेत्यर्थः अप्रस्तुतप्रशंसायां क्वचित्प्रस्तुताप्रस्तुतयोरभेदाध्यवसानमप्यप्रस्तुतवाक्यार्थप्रतीतिकाले दृश्यते ललितेतु न क्वापीति सुतरामतिशयोक्तितो भेद इत्याह सोऽपूर्वं इत्यादिना रसनाविपर्ययः अग्निशापात्करिणां जिह्वापरिवृत्तिः पूर्वं विपरीताभिधानं च कर्णचापलं प्रसिद्धं पिशुनप्रतार्यत्वं च मदः प्रसिद्धः गर्वे

तत्राप्यप्रस्तुतधर्मिवाचकपदस्यापि प्रसिद्धातिशयोक्त्युदाहरणेष्विव प्रस्तुतधर्मिलक्षकत्वसंभवात् नन्वप्रस्तुतप्रशंसायां सरूपाद प्रस्तुतवाक्यार्थात् प्रस्तुतवाक्यार्थोऽवगम्यते न त्वतिशयोक्ताविव विषयवाचकैस्तत्तस्य देर्विषयालक्ष्यंत इति भेद इति चेत् तर्हि इहा पि प्रस्तुतगतादप्रस्तुतवृत्तान्तरूपाद्वाक्यार्थात्तद्गतप्रस्तुतवृत्तान्तरूपो वाक्यार्थोऽवगम्यत इत्येवातिशयोक्तितो भेदोऽस्तु वस्तुतस्तु सो ऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा पूर्वं निश्चितवानसि भ्रमर हे यद्वारणो ऽप्यसावंतः शून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः इत्याद्यप्रस्तुतप्रशंसोदाहरणे प्रथम प्रतीतादप्रस्तुतवाक्यार्थात्प्रस्तुत वाक्यार्थोऽवगम्यत इत्येतन्न घटते ॥ अप्रस्तुते वारणस्य भ्रमरासेव्यत्वे कर्णचापलमात्रस्य भ्रमरनिराकरणहेतुत्वसंभवेपि रसना विपर्ययांतःशून्यकरत्वयोर्हेतुत्वासंभवेन मदस्य प्रत्युत तत्सेव्यत्व एव हेतुत्वेन च रसनाविपर्ययादीनां तत्र हेतुत्वान्वयार्थं वारणपदस्य

श्च तेन विस्मृता स्वपरयोर्दिक् मार्गः आत्मानात्मविभागश्च यया सा दृष्टिः वारणो गजः वारकश्च शून्यः सरंध्रः धनरहितश्च करः शुंडा हस्तश्च ग्रह आग्रहः ॥ कृतेन घ टते तत्राह अप्रस्तुत इति एतच्च भ्रमरासेव्यत्व इत्यस्य विशेषणं भ्रमरनिरासकरणस्येति च कर्णचापलमात्रस्येत्यस्य स्वीकारः सार्येन तमममभेदाध्यवसायः प्र स्तुतसंबोधनादिति आदिना सारूप्यनिबंधनप्रस्तुतवाक्यार्थावगतिपरिग्रहः अत्रापि ललितालंकारेपि वर्णनारूपस्येति चमत्कारितारूपायाविच्छित्तेर्मदव

कस्यचित् नेत्रद्वंद्वादेः स्ववाचकेन नेत्रादिपदेन अनिर्दिष्टत्वात् अप्रतिपादितत्वात् अतिशयोक्तिरस्तीति अतिशयोक्तिरेवास्तीत्यर्थः तत्प्रसंगात् संबोध्यत्वोच्चार
पितृत्वयोरसंबंधेपि संबंधवर्णनादतिशयोक्तिमात्रप्रसंगात् अलंकारांतरकस्त्वमित्यादावप्रस्तुतप्रशंसाप्रकृते तुलितमितितत्प्रतिविंबेति प्रस्तुतार्थप्रति
विंवरूपस्याप्रस्तुतार्थस्येत्यर्थः आदौ पूर्वो द्वैविषमेति स्वमतिसूर्यवंशयोरत्यंतानुरूपत्वरूपेत्यर्थः तात्पर्यस्य तादृशमतिकरणकसूर्यवंशवर्णनेच्छाभिप्रा
यस्या ९ अनायेति नलंप्रतिदमयंत्या उक्तिः हे नल अघत्वया कतमो देशः वसंतमुक्तस्ववनस्पदशामनायि प्रापितः त्वयि प्राप्ते संकेततया कृतार्था संज्ञाना
क्रोडीकारेणैव प्रवृत्तेर्वक्तव्यत्वात् एवंप्रत्ययपियप्रस्तुतसंबोधनादिविच्छित्तिविशेषात्तत्राप्रस्तुतप्रशंसायाअतिशयोक्तितो भेदोघटते ॥
तदात्रापि प्रस्तुतंधर्मिणं स्वपदेन निर्दिश्य तत्राप्रस्तुतवर्णनारूपस्य विच्छित्तिविशेषस्य सद्भावात्ततो भेदः स्फुतरांघटते पश्यनीलोत्प
लद्वंद्वान्निसरंति वापी कापि स्फुरति गगने तत्र सरसूक्ष्मपद्येत्यादिषु तु प्रस्तुतस्य कस्यचिद्धर्मिणः स्ववाचकेनानिर्दिष्टत्वादतिशयोक्ति
रेवैतेन गतजलसेतुबंधवर्णनादिष्वसंबंधे संबंधातिशयोक्तिरस्त्विति शंकापि निरस्ता तथास्ति कस्त्वंभोः कथयामीत्यादावपि तत्प्रसं ॥
गात्स्वारूप्यनिबंधनप्रस्तुतवाक्यार्थावगतिरूपविच्छित्तिविशेषालंकारांतरकल्पनं त्विहापि तुल्यं तस्मात्सर्वालंकारविलक्षणमिदं ॥
लितं यथा वा क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरं अत्रापि तिदर्शनाभ्रांतिर्न कार्या अल्प
विषयया मत्या सूर्यवंशवर्णयितुमिच्छुरहमिति प्रस्तुतवृत्तांतानुपन्यासात तत्प्रतिविंवभूतस्य उडुपेन सागरं तितीर्षुरस्मीत्यप्रस्तुतवृत्तांत
स्यवर्णनेनादौ विषमालंकारविन्यसनेन नवेकेवलं तत्वता
मापि अनेन मत्सदृक्षणेन जनेन न आत्मानश्रवणार्हा अपितु आत्मैवेति अत्र च तादृशवनदशारू
पस्याप्रस्तुतार्थस्य प्रस्तुते देशे कथनात्प्रस्तुतवृत्तांतस्याकरूपस्य प्रतीतिः न चात्र वारणेंद्रलीलामितिवत्पदार्थनिदर्शनाप्युक्तेतिवाच्यं तत्र पूर्वार्द्धेन प्रकृत
वृत्तांतोपादानेन साहश्यपर्यवसानरूपनिर्देशनासत्त्वेप्यत्र तदनुपादानेन तत्त्वंगमास्य पृतविच्छित्तिविशेषवत्त्वेन कल्पितालंकारस्यैवौचितत्वात् एतेन दर्पणपद

श्रीकत्वरूपकार्यद्वारेण कारणस्य राजकर्तृकस्यागकर्मत्वस्याभिधानात्पर्यायोक्तमिति यन्निरस्तं उपधेयसंकरे सत्युपाधेरसंकरादित्येवमिति संक्षेपः इति ललितं तामेवेति दूतिकामेवेत्यर्थः निसृष्टा प्रेषिता ससंकल्पां मनोरथसहितां मेघैरिति मेदुरं मुदिलं नंदः कदाचिदस्तीति शेषः नंदनिदेशात् नंदस्याज्ञावशात् प्रत्यध्वकुंजद्रुमं अध्वसंबंधिकुंजद्रुमं अध्वसंबंधिकुंजद्रुमं द्रुमं प्रति ग्रंथकारेण गीतगोविंदकृता चातकइति यत्तु चातकस्य त्रिचतुरकणमात्रार्थितया जलदकर्तृकेणांभसा विश्वपूरणेन हर्षाधिक्याभावादयुक्तमुदाहरणमिति तन्तुच्छं हेत्वसिद्धेः नहि स्वल्पमुपयुज्यमानमायतस्य यांप्सान्नमात्रार्थिनस्तदधिकान्नलाभे हर्षाधिक्यं नास्तीति

अनापि देशः कतमस्त्वयाद्य चमत्कृतमुक्तस्य दर्शावनस्य त्वदाप्तसंकेततयाऽऽकूतार्थोऽप्यनापिनानेन जनेन संज्ञा अत्र कतमो देशस्त्वयापरि त्यक्त इति प्रस्तुतार्थमनुपन्यस्य वसंतमुक्तस्य वनस्य दशामनायीति तत्प्रति विवभूतार्थमात्रोपन्यासाद्ललितालंकारः उत्कंठितार्थसं सिद्धिर्विनायत्नं प्रहर्षणं तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका उत्कंठा इच्छाविशेषः सर्वेंद्रियसुखास्वादो यत्रास्तीत्यभिमन्यते तत्प्रा प्तीच्छा ससंकल्पा मुत्कंठा कवयो विदुरित्युक्तलक्षणात् तद्विषयस्यार्थस्य तदुपायसंपादनयत्नं विना सिद्धिः प्रहर्षणं उदाहरणं स्प ष्टं यथावा मेघैर्मेदुरमंबरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय इत्थं नंदनिदेशतश्चलितयोः प्रत्यध्वकुंज द्रुमं राधामाधवयोर्जयंति यमुनाकूले रहः केलयः अत्र राधामाधवयोः परस्परमुत्कंठितत्वं प्रसिद्धतरमग्रे च ग्रंथकारेण निबद्धमितस्त त्रोदाहरणलक्षणानुगतिर्वांछितादधिकार्थस्य संसिद्धिश्च प्रहर्षणं दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः स्पष्टं यथावा चातकस्त्रिच तुरान्पयःकणान्याचते जलधरं पिपासया

वक्तुं शक्यते तदानीमुपयोगाभावेपि स्वस्यैव कालांतरे तदुपयोगसत्वात् न च चातकस्य जलसंग्रहा नुपयोगाद्विषम्यं शंकनीयं चातकवृत्तांतस्याप्रस्तुततयात्र ग्रंथे प्रस्तुतत्वात् तदा तृष्णावकवृत्तांते काव्यस्य पर्यवसानादिति तृतीयं प्रभेदमाह यत्नादिति प्रहर्ष णमित्यनुवर्तते निध्यंजनेति निधिदर्शनसाधनं यदंजनं तत्साधनौषधीमूलमित्यर्थः साधितौ लब्धः उच्चित्येति अधः स्थितं वृक्षस्याधोदेशे स्थितं ॥

अवस्थितमितिपाठे समीपाशोकयष्टावववस्थितमित्यर्थः श्रिताः आश्रिताः विटपाः शाखा येनेतिपुष्पौघविशेषणं अदधात् आहितवती यष्टिः स्कंधः तेनया
दाघातेन पुनरप्यामूलं पुष्पिताभूदयादशोकयष्टिः अत्रचतदसाध्यकयत्नात्तल्लाभ इतिप्रकारत्रयसाधारणं सामान्यलक्षणं वोध्यं इति प्रहर्षणं इष्यमाणवि
रोधोपायस्तत्संप्राप्तिर्विषादनमलंकारः उद्योजयेत उद्दिप्तंकुर्यात् उद्योजयेद्यावदित्यनेननतदिच्छामात्रेनतुतत्करणमितिविषमाद्भेदः एवमग्रिमोदाहरणेपी
च्छामात्रेनत्विष्टोस्यत्यनुकूलाचरणमिति इतिविषादनं एकस्येति एकस्यगुणदोषाभ्यामन्यस्यतौगुणदोषौयदिभवतस्तदोल्लासालंकारः अपीति आ

साधितो
सोपि द्रक्ष्यति विस्मयं भसाहंतहं तमहतामुदारता यत्नादुपायसिध्यर्थात्साक्षाल्लाभः फलस्य च निध्यंजनौषधीमूलं खनता
निधिः फलोपायसिध्यर्थाद्यत्नान्मध्येउपायसिद्धिमनपेक्ष्य साक्षात्फलस्यैवलाभोपिप्रहर्षणं यथानिध्यंजनसिध्यर्थं मूलिकाख
ननतस्तत्रैवविधेर्लाभः यथावा उच्चिसंप्रथममवस्थितं मृगाक्षीपुष्पौघंश्रितविटपं गृहीतुकामा अरोढुंपदमदधादशोकयष्टावामू
लं पुनरपि तेन पुष्पिताभूत् अत्र पुष्पग्रहणोपायभूतारोहणसिध्यर्थात्पदनिधानात्तत्रैव पुष्पग्रहणलाभः इष्यमाणविरुद्धार्थसंप्रा
प्तिस्तु विषादनं दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः यथावा रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति प
कजश्रीः इत्थंविचिंतयति कोशगते द्विरेफे हाहंतहंतनलिनीं गजउज्जहार एकस्य गुणदोषाभ्यामुल्लासोन्यस्यतौयदि अपिमांपाव
येत्साध्वी स्नात्वेतीच्छतिजाह्नवी काठिन्यंकुचयोः स्रष्टुंवांछत्यः पादपद्मयोः निंदंतिचविधातारंत्वद्धाटीष्वरियोषितः तदभाग्यंधनस्यै उ० १०
वयन्नाश्रयति सज्जने ४ लाभोयमेवभूपालसेवकानांनचे

पि संभावनायां साध्वीपतिव्रतास्नात्वामापावयेदितिजान्हवीइच्छतीत्यन्वयः तवधाटी
षु युद्धयात्रासु कुचयोः स्रष्टुं काठिन्यं पादपद्मयोर्वांछयारियोषितः विधातारं निंदतीत्यन्वयः स्रष्टमिति पाठे कुचयोः काठिन्यं पादयोः स्रष्टुमिच्छत्य इत्यन्वयः
लाभोयमिति भूपालसेवकानामयमेवलाभोयदिवधोनभवतीत्यन्वयः यदप्रमिति रथस्य संक्षोभात्स्खलमाघदयमंसो सेनार्थाद्दयितायानिपीडितः संघृष्टः

मंगेषुमध्ये सएवैकः कृतीकुशलः अवशिष्टमंगभूमेभीर इत्यर्थः दुर्वंशोदुर्दैवेर्गुणेभिः दुष्कुलैश्च इत्यादिः श्लेषोबोध्यः वननाशरूपः वनसंबंधीनाशरूपः व
नस्येतियुक्ततरः पाठः तत्प्रतिक्षेपोभ्रमरनिरासः गजस्यदोषत्वेनेतिसंबंधः आघ्रातमितिमुहुः परिलीढं आस्वादितं नीरसेनमनसाकरणभूतेनवानरेण
अन्यकस्यचिद्गुणेनान्यस्यगुणोदोषेणदोषोगुणेनदोषोदोषेणगुणोवावर्ण्यतेसउल्लासः द्वितीयार्द्धमाद्यस्योदाहरणं तत्रपतिव्रतामा
हिमगुणेनतदायस्नानतोगंगायाःपावनत्वगुणोवर्णितः द्वितीयश्लोकेद्वितीयस्योदाहरणं तत्रराज्ञोधाटीषुवनेपलायमानानाम
रातियोषितांपादयोर्धावनपरिपंथिमार्दवदोषेणतयोःकाठिन्यंमसंस्पृष्टार्घ्यकुचयोस्तत्स्पृष्टवतोधातुर्निर्घृणदोषोवर्णितः तृती
यश्लोकस्तृतीयचतुर्थयोरुदाहरणं तत्रसज्जनमहिमगुणेनधनस्यतदनाश्रयणंदोषत्वेनराज्ञः कौर्यदोषेणतत्सेवकानांबंधवि
नाविनिर्गमनंगुणत्वेनवर्णितं अनेनैवक्रमेणोदाहरणांतराणि यदयंरथसंक्षोभादंसेनांसोनिपीडितःएकःकृतीमदंगेषुशेषमंग
भुवोभरः अत्रनायिकासौंदर्यगुणेनतदंसनिपीडितस्यस्वासस्यकृतित्वगुणोवर्णितः लोकानंदनचंदनद्रुमसखेनास्मिन्वनेस्थीय
तांदुर्वंशैःपरुषैरसारहृदयैः। क्रांतमेतद्वनं तेह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुलानस्यान्येवकुलानिकेवलमिदंसर्वंदहे
युर्वनं अत्रवेणूनांपरस्परसंघर्षसंजातदहनेसंकुलत्वदोषेणवननाशरूपदोषोवर्णितः दानार्थिनोमधुकरायदिकर्णतालैर्दूरीकृता
करिवरेणमदांधवुध्यां तस्यैवगंडयुगमंडनहानिरेषाभृंगाःपुनर्विकचपद्मवनेचरंति अत्रभ्रमराणामलंकरणत्वगुणेनगजस्यतत्प्रति
क्षेपोदोषत्वेनवर्णितः आघ्रातंपरिचुंवितंपरिमुहुर्लीढंपुनश्चर्वितंत्यक्तंवामुविनीरसेनमनसातत्रव्यथांमाकृथाः हेसद्रत्नतवैवदेव
कुशलंयद्वानरेणादरादंतःसारविलोकनव्यसनिनाचूर्णीकृतंनाश्मना अत्रवानरस्यचापलदोषेणरत्नस्यचूर्णनाभावोगुणत्वेनवर्णितः
कार्त्ती तत्रनस्मिन्सतिविचारणव्यसनिनाविवारणतत्परेण अश्मनापाषाणेनप्रथमचतुर्थयोःगुणेनगुणोदोषेणवागुणइतिभेदयोः उल्लासः उल्लासरा

[illegible]

[illegible]

छत्रिन्यायेनेति केषुचिच्छत्रसंबंधाच्छत्त्रच्छत्रिसमुदायेछत्रिणो यान्तीतिवदित्यर्थः इत्युल्लासः प्रस्थं प्रस्थपरिमाणपात्रं मदुक्तिरिति ममोक्तिः कविताक धियातः
करणंकुधीभूयामृतीभूयचेन्मदयतितोषयतितदाः स्यामदुक्ते अरसानान्नीरसानां पुरुषाणामनादरसमूहैः किंनामस्यान्नकिंचिदित्यर्थः क्वचिदलसेति
पाठः परमरमणीयायिकेवरमणी स्त्रीयूनस्तरुणस्य यथातः करणहरणं कुरुते तद्वत्कुमारीणांबालानामित्यन्वयः त्वंचेदिति शिवभक्तिकस्यादिकवरुक्तिः

मध्यमयोश्छत्रिन्यायेनलाक्षणिकः ताभ्यांतौयदिनस्याताम वज्ञालंकृतिस्तसा स्वल्पमेवांबुलभते प्रस्थंप्राप्यापिसागरं मीलतियदि
पद्मानिकाहानिरमृतद्युतेः ताभ्यां गुणदोषाभ्यांतौगुणदोषौ अत्रकस्यचिद्गुणेनान्यस्यगुणालाभेद्वितीयार्धमुदाहरणं दोषेणदो
षस्याप्राप्तौतृतीयार्धे यथा मदुक्तिश्चेदंतर्मदयतिसुधीभूयःसुधियः किंमस्यानामस्यादलसपुरुषानादरभरैः यथापूनस्तद्वत्सर
मरमणीयायिरमणीकुमाराणामंतःकरणहरणंनैवकुरुते त्वंचेत्तंवरसेदृषेणलघुतांकानाम दिग्दंतिनांव्यालेः कंकणभूषणानि
कुरुषेहानिर्नहेम्नामपि मूर्द्धन्यं कुरुषेसितांशुमयशः किंनामलोकत्रयीदीपस्यांबुजबांधवस्यजगतामीशोसि किंब्रूमहे अत्राद्य
कवितारमणीगुणाभ्यामलसबालकयोर्हृदयोल्लासरूपगुणाभावोवर्णितः द्वितीयेपरमेश्वरांनगीकरणदोषेणदिग्गजादीनांल
घुतादिदोषाभावोवर्णितः दोषस्याभ्यर्थनानुज्ञातत्रैवगुणदर्शनात्विपदः संतुनः शश्वद्यासुसंकीर्त्यतेहरिः यथावा मय्येवजी क॰प्र॰
र्णतांयातुयत्वयोपकृतंहरे नरःप्रत्युपकारार्थोविपत्तिमभिकांक्षति इयंहनुमंतंप्रतिराघवस्योक्तिः अत्रप्रत्युपकाराभावोदोषस्त
दभ्युपगमेहेतुर्गणोविपत्त्याकांक्षायाम्

जलांशुवंद्रपक्षेजडांसु अंबुजबांधवः सूर्यः उल्लासरूपगुणाभावः उल्लासरूपस्यगुणस्याभावः इ
सवज्ञा दोषस्येति अभ्यर्थनाइत्यादितत्रैवदोषएव अनुज्ञेतिलक्ष्यनिर्देशः शश्वत निरंतरंसंकीर्त्यत इत्यनेनान्वयि मय्येवेति जीर्णतां प्रत्युपकारास्म
तां हरिशब्दोवानरार्थः मतिरेकमुखेति देधर्म्यमुखेत्यर्थः अस्यचार्थांतरन्यासेनेत्यनेनान्वयः दर्शितेति चैधर्म्यविपर्ययेप्रत्युपकारानभिलाषीविपत्तिं

व्रजेमेति हे प्रमथनाथ हरपैशाचिकीपिशाचसंबंधिनीं प्रकृतिं पिशाचतामेत्य नाप्यभवतोंतिकं समीपदेशं भजेम अमरसंपतीः किमिति प्रार्थयामहे यतो मघवदादिभिरिंद्रप्रमुखैरपि भवद्भवनदेहलीषु विकटतुंडस्य वक्रतुंडस्य दंडघातैः स्फुटन्मुकुटाग्रैर्भूयत इत्यर्थः इत्यनुज्ञा लेश इति लक्ष्यनिर्देशः प्रवसतीतिसप्तम्यंतपाठकस्य निंदायाः निंदाव्याजेन स्तुतौ चेत्यन्वयः संत इति सच्चरितस्योदयो वृद्धिः तद्व्यसनिनस्तत्पराः प्रादुर्भवद्यंत्रणं खेलाचरणनिरोधो येषां

साच व्यतिरेकमुखप्रवृत्तेन सामान्येन विशेषसमर्थनरूपेणार्थांतरन्यासेन दर्शिता यथा वा व्रजेम भवदंतिकं प्रकृतिमेत्य पैशाचिकीं किमित्यमरसंपदः प्रमथनाथ नाथयामहे भवद्भवनदेहलीविकटतुंडदंडाहतिस्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनं अखिलेषु विहंगेषु हंत स्वच्छंदचारिषु शुकपंजरबंधस्ते मधुराणां गिरां फलं दोषस्य गुणत्वकल्पनं गुणस्य दोषत्वकल्पनं च लेशः उदाहरणं सज्ञोऽभिमते विदुषि पुत्रे चिरं राजधान्यां प्रवसति तद्दर्शनोत्कंठितस्य गृहे स्थितस्य पितुर्वचनं अप्रस्तुतप्रशंसारूपं तत्र प्रथमार्द्धे इतरविहगानामवक्तृत्वदोषस्य स्वच्छंदचरणानुकूलतया गुणत्वं कल्पितं द्वितीयार्धे मधुरभाषित्वस्य गुणस्य पंजरबंधहेतुतया दोषत्वं कल्पितं न चात्र व्याजस्तुतिराशंकनीया नह्यत्र विहंगांतरणां स्तुतिर्व्याजेन निंदायां शुकस्य निंदाव्याजेन स्तुतौ वा तात्पर्यं किंतु पत्रदर्शनोत्कंठितस्य दोषगुणयोर्गुणदोषत्वाभिमान एवात्र श्लोके निबद्धः यथा वा ॥ संतः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यंत्रणाः सर्वत्रैव जनापवादचकिता जीवंति दुःखं सदा अव्युत्पन्नमतिः कृतेन न सतां नैवासतां व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः दंडी त्वत्रोदाहरति यथा — 

इत्थं दुर्लभा नाम रुचिरा स्वप्नपरायणा । ... (see below)

तां तव राजा प्राकृतः ... 

नते सर्वत्रैव विषये दुःखमिति क्रियाविशेषणं अव्युत्पन्नमतिः अनिपुणमतिः सा तासमीचीनेन कृतेनाचरणेन प्राकृतो नीचः युवैष इति वरार्थिनी कन्यकाप्रतिसखीवचनं चपल इत्यादि चनापिकायाः सखीं प्रति उत्क इति पाठेऽप्युत्कर्ष एवार्थः ॥ ६ ॥ ६ ॥ ६ ॥

कन्यापादोषत्वेनभासतामित्यन्वयः निर्वर्तितुमिच्छुर्निर्विवर्तिषातद्रूपदोषत्वेनेत्यर्थः निर्विविवत्सोरिति पाठे राज्ञो विशेषणं कुतस्तर्हि गुणत्वेन वर्णनं तत्राह राज
प्रकोपेति अन्येनाविदितं यथास्यादिति क्रियाविशेषणं लेशात एवेति तदुक्तं दण्डिना लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृतामिति लेशमात्रस्येति कृत्स्ना
र्थकं उदाहरणयोः अखिलेष्वित्याद्योः भिन्नविषयेति अन्यनिन्दयान्यस्य स्तुतिरन्यस्तुत्यान्यनिन्देत्येवमादिरूपेत्यर्थः ननु तथाप्येकविषयाव्याजस्तुतिर्नले

पि चपलो निर्दयश्चासौ जनः किं तेन मे सखि आगः प्रमार्जनायैव चाटवो येन शिक्षिताः अत्राद्यश्लोके राज्ञो वीर्योत्कर्षस्तुतिः ८ कन्या
या निरंतरसंभोगनिर्विवित्सो दोषत्वेन प्रतिभासतामित्यभिप्रेत्य विदग्धया सख्या राजप्रकोपपरिजिहीर्षया स एव दोषो गुणत्वेन व
र्णितः उत्तरश्लोके सखीभिरुपदिश्यमानं कर्तुमशक्तयापि तदग्रतो मानपरिग्रहानुगुण्यं प्रतिज्ञाय तदनिर्वाहमाशंकमानया सखीना
मुपहासं परिजिहीर्षन्त्या नायिकया नायिकस्य चाटुकारिता गुण एव दोषत्वेन वर्णितः न चाद्यश्लोके स्तुतिर्निंदापर्यवसायिनी द्विती
यश्लोके निंदास्तुतिपर्यवसायिनीति व्याजस्तुतिराशंकनीया राजप्रकोपादिपरिहारार्थमिह निंदास्तुत्योरन्याविदिततया लेशत एवो
द्घाटनेन ततो विशेषादिति वस्तुतस्त्विह व्याजस्तुतिसद्भावेपि न दोषः नह्येतावता लेशमात्रस्य व्याजस्तुत्यंतर्भावः प्रसज्जेत तद
संकीर्णयोरपि लेशोदाहरणयोर्दर्शितत्वात् नापि व्याजस्तुतिमात्रस्य लेशांतर्भावः प्रसज्जेत भिन्नविषयव्याजस्तुत्युदाहरणेषु
कस्त्वं वानर रामचंद्रभवने लेखार्थसंवाहको यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा इत्यादिषु दोषगुणीकरणस्य गुणदोषीक
रणस्य वाभावात् तत्रान्यगुणदोषाभ्यामन्यत्र गुणदोषयोः प्रतीतेः विषयैक्येपि इंदोर्लक्ष्म त्रिपुरजयिनः कंठमूलं मुरारेर्दिङ्नागानां
मदजलमषीभाजि गंडस्थलानि

शाद्विषयेत्याशंक्याह विषयैक्येपीति लेशास्यदर्शनादित्यग्रेतनेनान्वयः इंदोरिति हे उर्वीवलयतिलकरूप राजन् त्वदीयैर्यशोभिः किं धवलितं तद्रूपतोऽद्यापीं
दुलक्ष्मादीनि श्यामलिम्ना श्यामवर्णेनानुलिप्तान्याभासन्ते इत्यन्वयः लक्ष्म लाञ्छनं दिङ्नागानां दिग्गजानां मदजलमेव मषी तद्भाञ्जि तद्युक्तानि ॥ ८ ॥

परिसंख्येति एतान्येवश्यामानीत्येवंरूपेत्यर्थः विपर्यासंतरंदोषीकृताद्भिन्नेगुणाद्यमालंबनं सर्वदेति अरयः दृष्टमर्थातवलेभिरेप्राप्नुवंतःपलायनाभावात् दी
नातःपरिमाणविशेषपरिछिन्नास्ततवर्णमुद्रा एवंचलेशव्याजस्तुत्योरसंकीर्णविषसत्वेच गुणदोषीकरणादिकमित्यादिपदेनदोषगुणीकरणसंग्रहःयेषि
स्तुपक्रमातत्रेतिपाठोयुक्ततरः अत्रेत्यपियुक्तएववहृदमोपिपद्धन्दार्थपरामर्शकत्वात् इतिलेशःसूच्यार्थेतिसूचनीयस्यार्थस्येत्यर्थः मुद्रेतिलक्ष्यनिर्देशः
दृग्युग्मेविपुलंयस्याःस अत्रग्रंथेअस्मिन्नलंकारग्रंथेरत्नमालाशब्देनभगवत्स्तुतिपद्यावलीविशेषउच्यते रत्ननामनिवेशेन प्रकृतार्थपररत्नवाचि

अघाप्युर्वीवलयतिलकश्यामलिम्नानुलिप्तान्याभासंतेवदधवलितंकियशोभिस्त्वदीयैरित्याद्युदाहरणेषुलेशास्पर्शनात् तत्र
हीदुलक्ष्मादीनांधवलीकरणाभावदोषएवगुणत्वेननपर्यवस्यति ५ किंतुपरिसंख्यारूपेणततोन्यत्सर्वंधवलितमित्यन्योगुणः
प्रतीयतेक्वचिद्व्याजस्तुत्युदाहरणेगुणदोषीकरणसत्वेपिस्तुतेर्विषयांतरमपिदृश्यते यथा सर्वदासर्वदोसीतिमिथ्यासंस्तूयतेवु
धैःनारयोलेभिरेपृष्ठंनवक्षःपरयोषितः अत्रहिवाच्ययानिंदयापरिसंख्यारूपेणततोन्यत्सर्वमर्थिनामभिमतंदीनाशादिदीयतेइ
तिस्तुत्यंतरमपिप्रतीयते एवंचयेषुउदाहरणेषुकस्तेशौर्यमदोयोद्धमित्यादिषुगुणदोषादिषुगुणदोषीकरणादिकमेवव्याजस्तु
तिरूपतयावतिष्ठते तत्रलेशव्याजस्तुत्योःसंकरोस्तु इत्यमेवहिव्याजस्तुत्यप्रस्तुतप्रशंसयोरपिप्राक् संकरोवर्णितःसूच्यार्थसूच
नंमुद्राप्रकृतार्थपरैःपदैः नितंवगुर्वीतरुणीदृग्युग्मविपुलाचसा अत्रनायिकावर्णनपरेणयुग्मविपुलापदेनास्यानुष्टुभोयुग्मविपु
लानामत्वरूपसूच्यार्थसूचनंमुद्रा ५ ॥१
पदघटनेन तत्तन्नामकजातिसूचनं तन्नामप्रवृत्तिनिमित्तरत्नजातिसूचनं नक्षत्रमालाशब्दार्थोपि
पूर्वोक्तएव अग्न्यादिदेवतानामभिर्नक्षत्राणांतद्देवत्यानांसूचनंबोध्यं वक्ष्यमाणेति यथाअनर्घ्यराघवेयातिन्यायप्रवृत्तस्यतिर्यंचोपिसहायतां अयंयानंतुगम
कृतसोदरोपिविमुंचतीतिसूत्रधारवचनेनवक्ष्यमाणरावणदृत्तांतसूचनमितिबोध्यं इतिमुद्रा क्रमिकमिति प्रकृतार्थानांक्रमिकप्रसिद्धक्रमानुसारिन्यसनप्र

प्रकृतत्वंच यथा कथंचित्प्रकृतसंबंधलवोध्यं चतुरेति चतुरमास्यंयस्यसः चतुर्मुखश्च ॥ २ ॥ रत्याप्रेति हेवालेभवस्त्वाः स्तने श्रीरमणस्यविष्णोरवतारदशकंभातीस न्वयः कीदृशेरतावाप्तप्राप्तप्रियस्यलांछनंचिह्नंनखक्षतंगरागादिकंयेनतथाभूतेकठिनतायाआवासेस्थानभूतेरसेनालिंगितिप्रकृताल्हादेएकरसे तत्परे क्रमाद्दुदरामलकादिपरिमाणलाभेनोपचितेप्रवृद्धेभूभृतांपर्वतानांगुरुत्वमहंतिनाशयतितादृशेततोपिमहत्त्वात् चक्रवाकस्य द्वीपीले न स्तदृशत्वात्भोगःसुखंशरीरंवातद्भाजि जनितमदनेखेर्विंद्रियेपुलीनासक्ताउन्मुखायस्मिन्तादृशे एतैरेवविशेषणैरवतारदशकरूपनापिस्तन

यद्यप्यत्रग्रंथेरत्ननाम्नोनास्तिसूचनीयत्वं तथाप्यस्योत्तरार्धस्यलक्ष्यलक्षणयुक्तछंदःशास्त्रमध्यपातित्वेनतस्यसूचनीयत्वमस्ती तितदभिप्रायेणलक्षणंयोज्यं एवंनवरत्नमालायांततद्रत्ननामनिवेशेनतत्तन्नामकजातिसूचनंनक्षत्रमालायामश्व्यादिदेवताना मभिर्नक्षत्रसूचनमित्यादावयमेवालंकारः एवंनाटकेवक्ष्यमाणार्थसूचनेष्वपि क्रमिकंप्राकृतार्थानांन्यासंरत्नावलींविदुःचतुरा स्यःपतिर्लक्ष्म्याःसर्वज्ञस्त्वंमहीपते अत्रचतुरास्यादिपदैर्वर्णनीयस्यब्रह्मविष्णुरुद्रात्मताप्रतीयतइतिप्रसिद्धसहपाठानांक्रमेणा निवेशनंरत्नावली ॥ यथावा रत्याप्तप्रियलांछनेकठिनतावासेरसालिंगितेप्रल्हादैकरसेक्रमादुपचितेभूभृद्गुरुत्वापहेकोक स्पर्द्धिनिभोगभाजिजनितानंगेखलीनोन्मुखेभातिश्रीरमणावतारदशकंबालेभवंत्स्याः स्तने यथावा लीलाब्जानांनयनयुगलद्राघि मादत्तपत्रःकुंभावैभौकुचपरिकरःपूर्वपक्षीचकार भ्रूविभ्रांतिर्मदनधनुषोविभ्रमानन्ववादी त्वत्कज्योत्स्नाशशधररुचंदृष

स्यबोध्या तद्यथा रत्याप्राप्तःप्रियःकामस्तस्यलांछनंमत्स्यस्तद्रूपेकठिनतायाःआवासेकूर्मेरसयापृथिव्यासोद्धरणकालेआलिंगितेवराहे प्रल्हादेएकोरसः॥ प्रीतिर्यस्यतस्मिन्नृसिंहे क्रमःपादविक्षेपस्तदनुसारेणोपचितेप्रवृद्धेवामने भूभृतांराज्ञांगौरवनाशकेभार्गवे कोकस्पर्धिनिसीतावियोगातुरत्वाच्चक्रवाक शापदेरामे भोगःफणातद्भाजिशेषावतारेबलभद्रे जनितमनंगंअंगस्पर्शीरस्यविरुद्धमौनभोगत्यागसमाधिप्रभृतियेनतस्मिन्बुद्धे खलीनमश्वस्यवल्गात

क्रमाननुसरणेपीति तथाच प्रसिद्धसहपाठानामर्थानांन्यसनं रत्नावलिरिति सामान्यलक्षणं तत्क्रमाक्रमत्वेनतत्प्रभेदौ विनिभावः यन्देतिनस्यप्रतापः
निहतानांप्रतिशत्रुभूतानामंतः पुरेषु पंचमहाभूतमयोमूर्त इत्यादपद्यतेत्यन्वयः पंचमहाभूतमयत्वमेव विशेषणैर्दर्शयतिवह्निमयइत्यादि अंगेषु
क्ष्मामयः पृथ्वीमयः पीडाभरसहिष्णुत्वात् स्वांतर्वृत्तः करणेषु आकाशमयः तेषांभून्यताश्रयत्वात् ॐ यथाकथंचिदित्यस्यप्रपंचनं प्रकृतोपमा
नेत्यादि उपमानत्वेनोपरंजकत्वेनोपमानोपरंजके तयोर्भावस्तत्ता प्रकृतप्रस्तुयमानता उपरंजकता चेत्यर्थः उपरंजकतावारोप्यप्रमाणता तदुक्तं उपरंज

अत्र यत्नदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानिवुधजनप्रसिद्धक्रमेणन्यस्तानि प्रसिद्धसहपाठानाप्रसिद्धक्रमाननुसा
रणेप्ययमेवालंकारः यथावा यस्यवह्निमयोहृदयेषुजलमयोलोचनपुटेषुमारुतमयःश्वसितेषु क्ष्मामयोऽगेषु आकाशमयः
स्वांतेषुपंचमहाभूतमयोमूर्त इवादृश्यत निहतप्रतिसामंतांतःपुरेषु प्रतापः ॐ एवमष्टलोकपालनवग्रहादीनांप्रसिद्धसहपाठा
नांयथाकथंचित्प्रकृतोपमानोपरंजकतादिप्रकारेण निवेशनेरत्नावल्यलंकारः प्रकृतान्वयंविनाक्रमिकतत्तन्नाम्नांश्लेषभंग्यानि
वेशनेक्रमप्रसिद्धिरहितानांप्रसिद्धसहपाठानांनवरत्नादीनांनिवेशनेप्ययमेवालंकारः तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः
पद्मरागायतेनासामौक्तिकंतेऽधरत्विषा यथावा वीरत्वद्रिपुरमणीपरिधातुंपल्लवानिसंस्पृश्य नहरतिवनभुविनिजकररुहरु
चिरवचितानिपांडुपत्रधियापुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतं हरकंठांशुलिप्तोपिशेषस्त्वद्यशसासितः यथावा

कत्तामेतिविषयीरूपकंतदेति तत्रोपमानता रविरिवप्रतिदिवसोपजायमानोदयइत्यादिवत् उपरंजकतातु चतुरास्यइत्याद्युदाहरणे वह्निमयइत्यादि
प्रतापवर्णनेचस्पष्टैव प्रकृतान्वयंविनेति मित्रचंद्रमुखीबालालोहिताधरपल्लवेत्यादाविति भावः क्रमिकेत्युपलक्षणं तदभावेपि गुरुणा जघनेनेषा तरुणी
मंदगामिनीत्यादावप्ययमलंकारइति बोध्यं इति रत्नावली तद्गुणइति स्वगुणत्यागादनंतरं अन्यदीयगुणग्रहणं तद्गुणालंकारः पद्मेति तववनासामौक्तिकमप

वीरेति हे वीर त्वदरिकामिनीर्वनभुवि परिधानं कर्तुं पल्लवानि करेण संस्पृश्य पाण्डुपत्रबुध्या न हरति न गृह्णाति कीदृशानि निजकररुहाणां नखानां रुच्या अतको
सारवचितानि श्यामानीत्यर्थः इति तद्गुणः पुनरिति तत्स्वगुणत्यागानंतरं पुनः स्वगुणप्राप्तिः पूर्वरूपमलंकारः हरतीति नीलोपलानीति युक्तः पाठः विभिन्नेति आधारे
वक्रगिरिवर्णनं गरुडाग्रजेनारुणेन विभिन्नवर्णा मिश्रितवर्णाः सर्यस्य रथ्या अश्वा यत्र गिरौ वंशांकुरवन्नीलै रत्नैः पुरितः स्फुरत्सारुवा रवाहत्व नील
सुतिं आनिन्यिरे आनीतवंतः रुचा विभिन्नवर्णा इति नान्वयः ॥ केचिदित्यस्वरसबीजं तु पद्मरागायतद्गुलुदाहरणे तद्गुणालंकारेण स्यात् न चेष्टापत्तिः

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरत्सा रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ अयमेव तद्गुण इति
केचिद्बभञ्जुः पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि दीपे निर्वापिते प्यासीत्कांचीरत्नैर्महन्महः लक्षणे चकारात्पूर्वरूपमि
तिलक्ष्यवाचकपदानुवृत्तिः यथा वा हारैस्त्वद्विभिरावृत्तं वहिरपि प्रस्विन्नगंडैर्गजैरंतः कंचुकिभिः स्फुरन्मणिधरैरध्यासिता भूम
यः आक्रांतं महिषीभिरेव शयनं तद्विद्विषां मंदिरे राजन्सैव चिरंतनप्रणयिनी शून्येपि राज्यस्थितिः संगतान्यगुणानंगीकारमाहु
रतद्गुणं विरं रागिणि मच्चिते निहितोपि न रंजसि यथा वा गंडाभोगे विहरति मदैः पिच्छिले दिग्गजानां वैरिस्त्रीणां नयनकमले
ष्वंजनानि प्रमार्ष्टि यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितीन्द्र ननु चान्यगुणेनान्यत्र गुणो
दयानुदयरूपाभ्यामुल्लासावज्ञालंकाराभ्यां तद्गुणातद्गुणयोः को भे

अनुभवसिद्धचमत्कारस्य निरालंबनतापत्तेरित्यूहनीयं अथवायं तद्गुण
एवं स्वकारक्रमभंगेन काव्यप्रकाशकारादिमतोपन्यासपरत्वेनारब्धेयं तैरतद्गुणस्योदात्तत्वात् अत्र हि पूर्वमश्वानामरुणगुणत्वं अनंतरं रैवतकर
त्नैरुक्तये षां तद्गुणत्वमिति तद्गुणद्वयमिति तेषामभिमतं पूर्वेति वस्तुनि विकृते विगते सत्यपि पूर्वावस्थाया अनुवृत्तेरपि पूर्वरूपमलंकारः महः प्रकाशः
हारमिति हे राजन् तव विद्विषां मंदिरे शून्येपि चिरंतनः प्रणयोयस्याः ॥ सैव राज्यस्य स्थितिर्मर्यादास्तीति शेषः यतो हारैः खड्गिभिर्गंडकाश्मप्रगु

कु॰ टी॰ वहिरपिभूमयः मदप्रस्विन्नगंडैर्गजैरध्यासिताः अंतःपुरभूमयः विलसन्मणिधारिभिः कंचुकिभिः सर्पैरेव सौविदल्लैरध्यासिताः शायनं तल्पं महिषीभि

चं॰ र्वनिताभिरेवमहिषस्त्रीभिराक्रांतमित्यन्वयः इति पूर्वरूपं संगतेति संगतः स्वसंबद्धो योन्यः पदार्थस्तद्गुणानंगीकारमतद्गुणालंकारमाहुः चिरमिति ए

७६ गिणि अनुरागिणि मंजिष्ठारंजनद्रव्ययुक्ते च निहितोपि त्वेनरंज्जसितरक्तोनुरागश्चनेनवसीति श्लिष्टं गंडेति हे श्रीमन्नृसिंहाख्यभूपते एषा तव कीर्ति

मदैः पिच्छलेपंकिले दिग्गजानां गंडप्रदेशे पद्यपि विहरति तथापि वैरिस्त्रीणां नयनकमलेषु स्थितान्यंजनानि प्रमार्ष्टि प्रोंछति तदपि तथापि दिक्षु हिमकर

उल्लासावज्ञालक्षणयोर्गुणशब्दो दोषप्रतिपक्षवाची अन्यगुणेनान्यत्र गुणोदयतदनुदयौ च न तस्यैव गुणस्य संक्रमणासंक्रमणे

किंतु सद्रूपदेशेन सदसद्विषयोर्ज्ञानोत्पत्त्यनुत्पत्ती तद्गुणजन्यत्वेन संभावितयोर्गुणांतरयोरुत्पत्त्यनुत्पत्ती तद्गुणातद्गुणयोः

पुनर्गुणशब्दो रूपरसगंधादिगुणवाची ॥ तत्रान्यदीयगुणग्रहणाग्रहणे च रक्तस्फटिकवस्त्रमालिन्यादिन्यायेनान्यदीयगुणेनैवा

नुरंजनाननुरंजने विवक्षिते तथैव चोदाहरणानि दर्शितानि यद्यप्यवज्ञालंकृतिरतद्गुणश्च विशेषोक्तिविशेषावेव कार्याजनिर्वि

शेषोक्तिः सति पुष्कलकारणे इति तत्सामान्यलक्षणाक्रांतत्वात् तथाप्युल्लासतद्गुणप्रतिद्वंद्विना विशेषाकारेणालंकारांतरतया

परिगणिताविति ध्येयं प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः नीलोत्पलानि दधते कटाक्षैरतिनीलतां कपिरपि च कापिशा फँ

यनमदमत्तो वृश्चिकेन संदष्टः अपि च पिशाचग्रस्तः किं ब्रूमो वैकृततस्य अत्र कपित्वजात्या स्वतःसिद्धस्य चैकृतस्य मद्यादिभिरु ई

स्य चंद्रस्य मतत् किरणाद्वैवसिकीं स्वस्तीत्याहेत्यर्थे तदाहेति माशब्दादिभ्यष्टग्वाच्य इत्यनेन ठक्प्रत्ययः तत्सदृशीनियावत् स्फुरति प्रकाशत इत्यर्थः ॥ विशेषा

कारेणेति प्राक्लक्षितविशेषरूपेणेत्यर्थः इत्यर्थं गुणः प्रागिति परसंनिधिवशात्पूर्वसिद्धस्य स्वगुणस्योत्कर्षः अनुगुणीनामालंकारः नीलोत्पलानि कर्णाव

तंसीकृतानि कपिरिति कापिशायनं मद्यं इत्यनुगुणः मीलितमिति लक्ष्यनिर्देशः रसइति स्वभावलोहिते चरणे लाक्षारसो नालक्षि न ज्ञातः मल्लिकेति

क्षौमंदुकूलंतद्धारिण्यः इति मीलितं सामान्यमितिलक्ष्यनिर्देशः विशेषोव्यावर्तकधर्मः पद्मानामाकरः रत्नस्तंभेष्विति वालिसूनुना अंगदेन एकेनचरणज्यो।
क्षौमंदुकूलंतद्धारिण्यः इति मीलितं सामान्यमितिलक्ष्यनिर्देशः विशेषोव्यावर्तकधर्मः पद्मानामाकरः उक्तमेवार्थमुदाहरणाभ्यां दर्शयति मी॰
त्नादिना अपरस्यलाक्षारसाऽभिसारिकादेः भिन्नरूपेति मुखपद्मादेर्भिन्नस्यस्वरूपस्यावभासेपीत्यर्थः ॥ उक्तमेवार्थमुदाहरणाभ्यां दर्शयति मी॰
लितोदाहरणेहीत्यादिनादस्त्वंतरत्वेननभासतइत्यन्वयः तत्प्रतिबिंबानांचव्यक्तं तरतयाभानमस्त्येवेत्यनुषंगः केचिदिसत्याद्यरित्यग्रिमेणान्वयः केचित्प्र
लितोदाहरणेहीत्यादिनादस्त्वंतरत्वेननभासतइत्यन्वयः तत्प्रतिबिंबानांचव्यक्तं तरतयाभानमस्त्येवेत्यनुषंगः केचिदिसत्याद्यरित्यग्रिमेणान्वयः केचित्प्र मीलितमितिस्मृतमिति तयोर्मध्येएवंचेत्सत्यत्रमीलितालंकार
काशकारादयः तदुक्तं समेनलक्ष्मणावस्तुवस्तुनायन्निगृह्यते निजेनागंतुनावापितन्मीलितमितिस्मृतमिति तयोर्मध्ये एवंचेत्सत्यत्रमीलितालंकार

मीलितंपरिसादृश्याद्भेद एवनलक्ष्यतेरसोनालक्षितलाक्षायाश्चरणेसहजारुणे यथावा मल्लिकामाल्यभारिण्यः सर्वांगीणार्द्रचंद
नाः क्षौमवत्योनलक्ष्यंते ज्योत्स्नायामभिसारिकाः अत्राद्येचरणालक्तकरसयोरुणिमगुणसाम्याद्भेदानध्यवसायः द्वितीयोदाह
रणेचंद्रिकाभिसारिकाणांधवलिमगुणसाम्याद्भेदानध्यवसायः सामान्यंयदिसादृश्याद्विशेषोनोपलक्ष्यते पद्माकरप्रविष्टानां
मुखंनालक्षिमुभ्रुवां यथावा रत्नस्तंभेषुसंक्रांतैः प्रतिबिंबशतैर्वृतः लंकेश्वरः सभामध्येनज्ञातोवालिसूनुना मीलितालंकारे
एकेनापरस्यभिन्नस्वरूपानवभासरूपंमीलनंक्रीयते सामान्यालंकारेतुभिन्नस्वरूपावभासेपिव्यावर्तकविशेषोनोपलक्ष्यतइति
भेदः ॥ मीलितोदाहरणेहिच रणादेर्वस्त्वंतरत्वेनागंतुकंयावकादिनभासते सामान्योदाहरणेतुपद्मानांमुखानांचव्यक्तंतरत
याभानमस्त्येव यथाराेवणदेहस्यतत्प्रतिबिंबानांच किंचिदंपद्ममिदंमुखमयंबिंबोयंप्रतिबिंबइति विशेषः परंनोपलक्ष्यते॥

दृश्यतनेनान्वयः अपांगस्तरलोपयोस्ते तरलाः सत्वरंसंचारणात् वक्रावक्रोक्तिभिः वर्णापास्कृताः गिरोवाक्यरूपाः इतिप्रकारेणमृगदृशामंगकेलीलया
स्वनः स्वाभावात्स्फुरितंप्रकटीभूतंतत्तस्मादनंगकेतुकृतपदः कृतस्थितिः भेदाध्यवसायेपीति मुखपद्मयोर्भेदावभासेपीत्यर्थः आवर्तकास्फुरणेनहेतुना॥
अलंकारांतरेणेति स्वरूपातिरोधानेनमीलितासंभवात् भेदातिरोधानेनचसामान्यस्याप्यसंभवादितिभावः सामान्येति न यावगुणसाम्याद्विशेषाग्रहइति

विशेषाग्रहश्चक्वचिद्भेदे गृह्यमाणेऽपि क्वचिद्गृह्यमाणइत्याद्यप्रकारान्तर्गतिरत्र तन्मते स्यादिति भावः अवान्तरभेदेन वेत्यनन्तरभाव्यमित्यत्रोपजीव्येते ॰ पूर्व
स्मिन्निति मीलितं यदि सादृश्याद्भित्यादिपूर्वोक्तचंद्रालोकतन्मत इत्यर्थः स्वरूपतिरोधाने अपांगतरलइत्यादिस्वरूपतिरोधानस्थले अलंकारान्तरेणेसा
दिस्वरूपतो ज्ञायमाने सादृश्याद्भेदाग्रहणं मीलितमित्यंगीकारे प्रथमः पक्षः सादृश्याद्भेदाग्रहणमित्येतावन्मात्रं मीलितलक्षणांगीकारेण द्वितीय इति
भावः इति सामान्ये भेदेन वैशिष्ट्ये वेजात्यं उन्मीलितं विशेषकश्च क्रमेणालंकारा इमे भेदाग्रहान्तर्गतं लक्षितानीति संकुचितत्वादिति भावः सा

अत एव भेदतिरोधानान्मीलितं तदतिरोधानेऽपि साम्येनव्यावर्तकानवभासे सामान्यमित्युभयोरप्यन्वर्थता केचित्तु वस्तुद्वयस्य
लक्षणसाम्यात् योः केनचिद्बलीयसा तदन्यस्य स्वरूपतिरोधाने मीलितं स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधाने सामान्यं ए
वंच अपांगतरले दृशौ तरलवक्रवर्णा गिरो विलासभरमंथरा गतिरतीव कांतं मुखं इति स्फुरति मंगके मृगदृशां स्वतो
लीलया तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते इत्यत्र मीलितालंकारः अत्र हि दृक्तरलत्वादीनां नारीवपुषः सहजधर्मत्वान्म
दोदयकार्यत्वाच्च तदुभयसाधारण्यादुत्कृष्टतारल्यादियोगिना वपुषा मदोदयस्य स्वरूपमेव तिरोधीयते लिंगसाधारण्येन तत्
ज्ञानोपायाभावान्मल्लिकामाल्यभारिण्य इत्यादिषु तु सामान्यालंकार इत्याहुः तन्मते पद्माकरप्रविष्टानामित्यादौ भेदाध्यवसाये
पि व्यावर्तकास्फुरणे नालंकारान्तरेण भाव्यं सामान्यालंकार एवान्तरभेदेन वा ॰ पूर्वस्मिन्मते स्वरूपतिरोधाने लंकारान्तरेणाभा
मान्यरीत्या सामान्यालंकारन्यायेन एवं चवेत्रत्व चातुल्यरुचां वधूनां कर्णाग्रतो गंडतलागतानि भृं ॰ अमीलितावान्तरभेदेन वा भेदवैशिष्ट्ययोः
गाः सहेलं यदि नापतिष्यन् कोवेदयिष्यन्नवचंपकानीत्यपि विशेषकोदाहरणं बोध्यं यत्त्वनुमानालंकारेणैव गतार्थता न्वानयोरलंकारान्तरत्वमिति तदयु
क्तं उदात्तस्थले भेदविशेषस्फुरणे विशेषदर्शनहेतुकप्रत्यक्षरूपत्वात् अयापि स्वकपोलकल्पितपरिभाषयाऽनुमानालंकारतांत्रूषे तथापि सादृश्यमहि

मीलितसामान्ययोर्भेदविचारः

स्फुरणात्मना विशेषाकारेण मीलितसामान्ययतिरेकिनायुक्तमेवालंकारांतरत्वं अतद्गुणावत्तयोरिवविशेषोत्पलंकारादित्यलंविस्तरेण नृत्यदितिनृत्यकु
वंतो भर्गस्य हरस्य हरस्य यो ऽट्टहासस्तत्यसरस्य समूहस्य विस्तारस्य वासहचरैः सदृशैरित्यर्थः ईदृक्कीर्तिवच्छुभ्रः एषः कमलाकामुकः नाभीकमलपरि
मल स्यप्रौढिसमृद्धिंयदिनासादयिष्यत्तनाधारयिष्यदित्यन्वयः ५ यतुतद्गुणस्यात्रनिर्बोधत्वात्कथंतस्यातिदंद्वित्वमुन्मीलितस्येति तदनुक्तोपालं
स्फूर्तावुन्मीलितविशेषकौ हिमाद्रिंत्वद्यशोमग्नंसुराः शीतेननजानते लक्षितान्युदितेचंद्रे पद्मानिचमुखानिच मीलितन्याये
नभेदानध्यवसायेप्राप्तेकुपितोपिहेतोर्भेदस्फूर्तौमीलितप्रतिद्वंद्युन्मीलितं तथासामान्यरीत्याविशेषास्फुरणेप्राप्तेकुतश्चि
त्कारणात् विशेषस्फूर्तौतत्प्रतिद्वंद्वीविशेषकः क्रमेणोदाहरणद्वयं तद्गुणरीत्यापिभेदानध्यवसायप्राप्तावुन्मीलितंदृश्यते य
या नृत्यद्भर्गाट्टहासप्रचरसहचरैस्तावकीनैर्यशोभिर्धावल्यंनीयमानेत्रिजगतियरितः श्रीनृसिंहक्षितींद्रनेदृग्यघोषनाभीक
मलपरिमलप्रौढिमासादयिष्यद्देवानांनाभविष्यत्कथमपिकमलाकामुकस्यावबोधः काकः कृष्णः पिकः कृष्णः कोभेदः पिक
काकयोः वसंतसमयेप्राप्तेकाकः काकः पिकः पिकः इदंविशेषकस्योदाहरणं अत्रद्वितीयकाकपिकपिकशब्दौकाकत्वेनज्ञातः पि
कत्वेनज्ञातइत्यर्थांतरसंक्रमितवाच्यौ ६ यथावा वाराणसीवासवतांजनानांसाधारणेशंकरत्वाद्गुनेपि पार्थप्रहारव्रणसुत्तमांग
गंप्राचीनमीशंप्रकटीकरोति किंचिदाकूतसहितंस्याद्धृदोतरमुत्तरं यत्रासौवेतसीपांथतत्रेयंस्त्यत्तरासरित् सरितरणमार्गंपृच्छं
तंप्रतितंकामयमानायाउत्तरमिदंवेतसोकुंजेस्वाच्छंद्यमित्याकूतगर्भं अथवा ग्रामेस्मिन्प्रस्तरप्रायेनकिंचित्त्रांथविद्यते पयोध
भरूपत्वादपेक्ष्यंतद्गुणेनभेदानध्यवसायमात्रस्योक्तत्वात् वाराणसीति तृतीयलोचनादिचिह्नेसाधारणेपिस रोन्नतिंदृस्वावस्तुमिच्छसिचेद्वस
तीत्यन्वयः पार्थोर्जुनस्तेनकृतोयः प्र हारस्तेनव्रणोयत्रतादृशमुत्तमांगशिरः पूर्वत्रस्वाभाविकगुणसाम्यं इहत्वागंतुकगुणसाम्यमितिभेदः इत्युन्मीलित

किंचिदिति किंचिदभिप्रायसहितं गूढमुत्तरं उत्तरं नामालंकारः वेतसी वेतसलता सुखेन तरितुं योग्याः स्तनरा ग्राम इति प्रस्तरप्रायोपाषाणबहुले पाषणतुल्ये च प्रायो बाहुल्यतुल्ययोरिति कोशात् किंचिदास्तरणादिकं समागमप्रतिबंधकं च पयोधरोन्मेघः स्तनश्च कश्चिदवगमिष्यति ज्ञास्यतीत्येतादृशं इत्यादिरूपं उन्नेयः कल्प्यः प्रश्नो येन तादृशस्योत्तरस्य ईर्ष्यामानेति ईर्ष्याहेतुकमानेत्यर्थः अनुतप्तायाः पश्चात्तापयुतायाः ॥२॥ प्रश्नोत्तरेति प्रश्नश्च उत्तरांतरं च प्रश्नोत्तरांतरे ताभ्यामभिन्नमुत्तरं चित्रमित्युच्यत इत्यर्थः केदारेति केदारे यां पोषयेरताः के इति प्रश्नः केदारस्य क्षेत्रस्य पोषणे रता इति

अस्तरणादिकमर्थयमानं पांथं प्रत्युक्तिरियं स्तनोन्नतिं दृष्ट्वा रंतुमिच्छसि चेद्वस अविदग्धजनप्रायेऽस्मिन् ग्रामे कश्चिदवगमिष्यतीत्येतादृशं प्रतिबंधकं किंचिदपि नास्तीति हृदयं इदमुन्नेयप्रश्नोदाहरणं निबद्धप्रश्नोत्तरं यथा कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तं पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ईर्ष्यामानानंतरमनुतप्तायां नायिकायाः सखीमागतां प्रति तस्याः कुशलमिति नायकस्य प्रश्नः जीवतीति सख्या उत्तरं जीवत्याः कुतः कुशलमिति तदभिप्रायः अन्यत्पृष्टमन्यदुत्तरमिति नायकस्य पुनः कुशलं पृच्छामीति प्रश्नः पृष्टस्योत्तरमुक्तमित्यभिप्रायेण जीवतीत्युक्तामिति सख्या वचनं सखीवचनस्याभिप्रायोद्घाटनार्थं पुनरपि तदेव कथयसीति नायकस्याक्षेपः मृतां नु कथयामि या श्वसितीति स्वाभिप्रायोद्घाटनं सति मरणे खलु तस्याः कुशलं भवति मदागमनसमयेऽपि श्वासेषु संचरत्सु कथं मृतां कथयेयमित्यभिप्रायः ॥३॥ प्रश्नोत्तरांतराभिन्नमुत्तरं चित्रमु

तदेवोत्तरं के खेटाः खे आकाशे अटतीति प्रश्नस्य पदुत्तरं वयः पक्षिण इति तत्किं चलमिति प्रश्नस्य पदुत्तरांतरं वयस्तारुण्यादीति तेनाभिन्नं इत्युत्तरं सूक्ष्ममिति॥ पराशयाभिज्ञस्य इतरस्मिन्परविषये साभिप्रायं वेष्टितं सूक्ष्मालंकारः पराशयाभिज्ञश्चासावितरश्चेतस्य साकूतचेष्टितमर्थात्परविषयमिति चार्थः संकेतेति संकेतकालमनोयस्य तज्जिज्ञासुमिति यावत् विटं जारं नेत्राभ्यामर्पितमाकूतं यास्मिन् तादृशं लीलासंवेधि पद्मं नेत्रे स्यादिक्रियाविशेषणं वा इति सूक्ष्मं

पिहितमिति लक्ष्यनिर्देशः तल्पं ज्ञापनं वल्केति वल्केप्रसत्ववृणशीलानां स्वेदविंदूनां प्रबंधैर्धाराभिः कंठे भिन्नं लग्नं कुंकुमं दृष्ट्वा कापि वयस्या स्मरन्तीस्मिता स्मित
कृत्वा पुंस्त्वं व्यंजयंती सती तान्याः पाणौ खड्गलेखां लिखेत्यन्वयः सूक्ष्मालंकारपराभिप्रायमवगत्य साकूतचेष्टितेनोत्तरसमर्पणं पिहितालंकारे तु गूढं परं
वृत्तांतं ज्ञात्वा साकूतचेष्टया तत्प्रकाशनमिति भेदो बोध्यं इति पिहिते आजोक्तिरिति लक्ष्यनिर्देशः चौर्यरतकृतसंकेतभूतभूमिपृष्ठलुंठनमित्यन्वयः

केदारपोषणरताः के खेटाः किंच लंबवपुः अत्र केदारपोषणरता इति प्रश्नाभिन्नमुत्तरं के खेटाः किंचलमिति प्रश्नद्वयस्य वपुरित्ये
कमुत्तरं उदाहरणांतराणि विदग्धमुखमंडने द्रष्टव्यानि सूक्ष्मे पराशयाभिज्ञेतरसाकूतचेष्टितं मपि पश्यतिसा केशैः सीमंतमणिमा
वृणोत् कामुकस्यावलोकनेन संकेतकालप्रश्नभावं ज्ञातवत्या चेष्टेयं अस्तंगते सूर्ये संकेतकाल इत्याकूतं यथावा संकेतकालमनसं
विटं ज्ञात्वा विदग्धया आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितं पिहितं परवृत्तांतज्ञातः साकूतचेष्टितं प्रियेगृहागते प्रातः कांतात
ल्पमकल्पयत् रात्रौ सपत्नीगृहे जागरणेन श्रांतोसीति तल्पकल्पनाकूतं वल्कस्यं रिस्वेदविंदुप्रबंधैर्दृष्ट्वा भिन्नं कुंकुमं कापि कंठे पुंस्त्व
तन्व्यां व्यंजयंतीव यस्यास्मित्वा पाणौ खड्गरेखां लिलेख अत्र स्वेदानुमितं पुरुषायितं पुरुषोचितखड्गलेखनेन प्रकाशितं आजोक्ति
रन्यहेतूक्त्या यदाकारस्य गोपनं सखि पश्य गृहारामपरागैरस्मि धूसरा अत्र चौर्यरतकृतसंकेतभूपृष्ठलुंठनलग्नधूलिजालस्य गोप
पनं यथावा कस्य वा न भवेद्रोषः प्रियायाः सव्रणेधरे सभृंगं पद्ममाघ्रासीर्वारितापि मयाधुना उपपतिनाखंडिताधरायाः नायिका
याः सकाशमागच्छंतं प्रियमपश्यंत्येव सख्यानायिकां प्रतिहितोपदेशव्याजेनेतं प्रतिनायिकापराधगोपनं ॥ तस्यां छेकापन्हुतेरस्याश्चायं
उपपतिना जारेण ॥ तस्यां छेकापन्हुतौ आपांतमिति प्रतोल्यां रथ्यायां एकांकाविद्रामावनितासख्याः पुरस्तात् रोमांचकंपादिभिरनुभावैर्व्यज्यमानमनुरागं
एनं हरिं प्रणमंती सती जुगूह गोपितवतीत्यन्वयः लक्ष्यते अनूपते एवमिति सूक्ष्मालंकारवदुक्तिरूपव्यापारवर्णनमित्यर्थः उदाहर्तव्यमिति यथा वल्कस्यंदी

आलीवालास्मस्मितमाह मंदं मुग्धाक्षि त्वामयपश्यामि नाथमित्युत्तरार्धनिर्माणेनार्थमित्युक्ताप्रकाशनमिति बोध्यं वस्तुसौंदर्येति वेतसनिकुंजरूपवस्तु
सौंदर्येत्यर्थः ध्वनिभावास्पदत्वात् तद्ध्वनित्वाश्रयत्वात् उपसंहरति अत इति पेषित्ससस्वभावाविकारणमस्तीत्यनेनान्वयः इति व्याजोक्तिः ५ गूढोक्तिरिति यदन्यो
द्देशकं वाक्यं तत्तदन्यंप्रति कथ्यते चेत् गूढोक्तिरलंकारः क्षेत्रं संस्पादेः कलत्रं च अपेहि दूरीभव अविवक्षितत्वादिति अयंभावः प्रकृताप्रकृतश्लेषेः सावुदयम

तस्यां वच्चनस्यान्यथानयनेनापह्नवः आस्यामाकारस्य हेत्वंतरवर्णनेन गोपनमिति लक्षणे लक्ष्यनाम्निवोक्तिग्रहणमाकारस्य
गोपनार्थं हेत्वंतरप्रत्यायकव्यापारमात्रोपलक्षणं ततश्च आयांतमालोक्य हरिं प्रतोल्यामाल्याः पुरस्तादनुरागमेकारोमांचकं
पादिभिरुच्यमानेभामानुगूहप्रणमत्यथैनं इत्यत्रापि व्याजोक्तिरेव तत्र ह्यनुरागकृतस्य रोमांचाद्याकारस्य भक्तिरूपहेत्वंतर
प्रत्यायकेन प्रणामेन गोपनेकृते सूक्ष्मपिहितालंकारयोरनिवेशितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणं ततश्च नलिनी
दलेबलाकामरकतपात्रइव दृश्यते शुक्तिः इति मम संकेतभुवि ज्ञात्वाभावं तदाब्रवीदालिमित्यादिष्वपि सूक्ष्मालंकारः प्रसरत्ति
अत्रश्लोके तावत्किमावयोः संकेतस्थानंभविष्यतीति प्रश्नाशयं सूचयति कामुके तदभिज्ञया विदग्धया तदा संखीप्रति साकूतमु
क्तिमिति सूक्ष्मालंकारोभवति यतोत्र बलाकायामरकतपात्रप्रतिष्ठितशुक्त्युपमया तस्यानिश्चलेनाश्वस्त्वं तेन तस्य प्रदेशस्य प्रद
शेस्य निर्जनत्वं तेन तदेवावयोः संकेतस्थानमिति कामुकंप्रति सूचनं लक्ष्यते न चात्र ध्वनिराशंकनीयः इत्येवमुच्यमानस्यापि संके
तस्थानप्रश्नोत्तरस्य स्वोक्त्यो वैविश्कृतत्वात् एवं पिहितालंकारेप्युदाहार्यं इदंचान्यदत्रावधेयं यत्रासौ वेतसीपांथेत्यादिषु गूढोत्तर
रूढदत्वादावप्रकृतसंबंधाबाध्यः स च न संभवति विवक्षविवक्षाविरहादिति कुन स्तर्ह्यप्रकृतार्थकथनं तत्रा सूक्ष्मपिहितव्याजोक्त्युदाहरणेष्वभा
द तस्येति अप्रकृतार्थस्येत्यर्थः ननु तादृशविवक्षाविरहेपि नानार्थविन्यासमात्रेणाप्युश्लेषणएवेत्याशंक्याह विच्छित्तिविशेषेति तथाचश्लेषसत्वेपि विच्छित्ते

वोन स्वोत्त्या विष्कृतः

विशेषाद्गूढोक्तिरवश्यमंगीकार्येत्याशयः

अतएवश्लेषमात्रमितितन्मात्रनिराकरणमेवोपक्रांतंनतुश्लेषनिराकरणमिति नादइति विपणिः पण्यवीथिकापुष्पिणी रजस्वला आगमेनंवेदेनलालनीयःस्तु
स्यः आगमनेनलालनीयश्च रजनीं आयेत्यस्य तसंयोगेहितीयाइतिगूढोक्तिः स्निग्धगुम्फमिति स्निग्धेत्युपलक्षणं अर्थशक्तिमूलगम्यस्यापिगद्यमस्य च्युतेत्यादौस्व
किंतुवस्तुसौंदर्यबलाद्वक्तृबोद्धव्यविशेषिताद्गम्यः तत्रैववस्तुतोनालंकारत्वंध्वनिभावास्पदत्वात प्राचीनैः स्वोक्त्याविष्करणेसत्यलं
कारास्पदत्वास्तीतिसुदाहृतंतत्वादस्माभिरप्युदाहृतानि ग्रामकांहियत्रासौवेतसीपाथतत्रैयमस्तत्रास्तरित इति पृष्टंतमध्वानंकामिन्या
हसस्तूचनेइत्याघयांतरकल्पनयाभावाविष्करणमित्यतःप्राकृलिखितादाहरणेषु संकेतकालमनसंपुंस्त्वतन्व्याश्वंजयंतीभामाजगृहे
तिभावोविष्करणमस्तितेष्वेवततदलंकारइति ५ गूढोक्तिरन्योद्देश्यंचेयदन्यंप्रतिकथ्यते वृषापेहिपरक्षेत्रादायातिक्षेत्ररक्षकः यं
प्रतिकिंचिद्वक्तव्यंततटस्थैर्माज्ञायीतितदेवतदन्यंकंचित्प्रतिश्लेषेणोच्यतेचेत्सागूढोक्तिः वृषेत्याद्युदाहरणं परकलत्रंभुंजानंकामु
कंप्रतिवक्तव्यंपरक्षेत्रेसस्यानिभक्षयंतंकंचिदुक्षाणंसमीपेचरंतंनिर्दिश्यकथ्यते नेयमप्रस्तुतप्रशंसा कार्यकारणादिव्यंग्यप्र
त्वाभावात् नापिश्लेषमात्रमप्रकृतार्थस्यप्रकृतार्थान्वयित्वेनाविवक्षितत्वात् तस्यकेवलमितरवंचनार्थंनिर्दिष्टतयाविच्छित्तिविशे
षसद्भावात् यथावा नाथोमेविपणिंगतोनगणयत्येषासपत्नीचमांस्वत्कामामिहपुष्पिणीतिगुरवःप्रासागृहाभ्यंतरं श्वाप्या
मात्रसहायिनीपरिजनःश्रांतोनमांसेवतेस्वामिन्नागमलालनीयरजनींलक्ष्मीपतेरक्षमां अत्रलक्ष्मीपतिनाम्नोजारस्यागम
नंप्रार्थयमानायास्तदस्थंवचनायभगवंतंप्रत्याक्रोशस्यप्रत्यायनंविरत्तोक्तिः स्निग्धगुम्फंकविनाविष्कृतंयदिवृषापेहिपरक्षेत्रा ५
प्राह्यत्वात् ५ वत्सेइति वत्सेलक्ष्मि विषादखेदं हर त्व उरुजंवमहावेगंऊर्ध्वप्रवृत्तश्वसनंश्वासंपवनंवसत्यं जकंजलंपातीतितयावरुणः कंपश्च गुरुर्महा
न् वृहस्पतिश्चबले प्रसिद्धं तद्विदानाशकेन वलाख्यदत्यानाशकेनेंदेणच अत्रश्रीकृष्णसन्निधौयाहिइतिप्रकारेणभयनिवारणव्याजेनसुराणां

दितिवक्तिसस्रूचनंस्निग्धगुम्फंवस्तुपथा

प्रसाख्यानंवर्जनंकारयित्वामंयोमथनेतेनमुग्धाः

कु० टी० पयोधिर्यस्मैलक्ष्मीमदात्सवोदुरितंदहत्वित्यन्वयः परेति परेवचनायगुप्तस्याविष्करणमित्यर्थः त्रपेति लज्जयागुप्तस्येत्यर्थदृष्टेति गोपेत्यपियोगआ
चे० मतिस्तहृतया अपहृतयागवापरागैर्धूलिभिर्यामृयाच गोपेति संबोधनंवा किंचित्सम्मविषमे युक्तायुक्तंच इहत्यपि भूमौच पत्युर्भावः पतितातां
८० पतनं प्राप्ताच विषमेषुः पंचशरस्तेनखिन्नमनसांविषमेषु संकटेषुखिन्नमनसांच अबलानां स्त्रीणां बलरहितानांच सलेशांससूचने गोष्ठेगोस्थानं
चेतोनत्नमिति लंकांनअयतेनगच्छतीत्यर्थेनलंकामयतेरुच्छतोत्ययंगुप्तः तदाविष्करणंचह्रीणात्वदृष्टावेत्यनेनेतिबोध्यं शब्दशक्तीति शब्दश्लेषवशेनेत्य

कथंचित्कविनाविष्कृतंचेद्विद्वतोक्तिःदृषापेहीत्युदाहरणेपूर्ववत् गुप्तंवस्तुसंसूचनमितिकतिनाविष्कृतं २ यथावा वत्सेमा
गाविषादंश्वसनमुरुजवंसंत्यजोर्ध्वप्रवृत्तंकंपः कोवागुरुस्तेकिमिहवलभिदाजृंभितेनात्रयाहि प्रत्याख्यानंसुराणामितिभयश
मनच्छद्मनाकारयित्वायस्मैलक्ष्मीमदाद्वः सदहतुदुरितंमंथमुग्धःपयोधिः इदंपरवचनायगुप्ताविष्करणं त्रपागुप्ताविष्करण
त्रपागुप्ताविष्करणंयथा दृष्ट्याकेशवगोपरागहृतयातेनेहतयाकिंचिन्नदृष्टंमयातेनेहस्खलितास्मिनाथपतितांकिन्नामना
लंबसे एकस्त्वंविषमेषुखिन्नमनसांसर्वावलानांगतिर्गोप्येवंगदितःसलेशमवताद्गोष्ठेहरिर्वश्चिरं अत्रकृष्णस्यपुरतोवि
षमेपरिस्खलनमभिहितवत्यास्तंकामयमानायागोपिकायावचनेविषमपथिस्खलनपतनत्राणसंप्रार्थनरूपेणझटिति
प्रतीयमानेनार्थेनगुप्तंविवक्षितमर्थांतरंसलेशंससूचनमित्यनेनाविष्कृतं एवंनैषधादिषुचेतोनलंकामयतेमदीयमितिदम
यंतीवाक्यादिकमप्युदाहरणं॥

यः कोडीकृतः संगृहीतः ५ गच्छाम्येति अच्युतमद्विषये अस्खलितेतिगुप्तार्थः चिरकालेत्वद्दर्शनेनापिनतृप्तिरित्य
र्थेनदर्शनेननतृप्तिरपितुसंभोगेनेत्यर्थोगुप्तः विजनस्थयोरेकांतमतयोः हतश्चासौजनः अन्यथा रत्यर्थस्थिताविति संभावयति तेनद्वयोरकीर्तिर्जातेत्य
वृथैवात्मानंवचयावइतिगुप्तार्थः आमंत्रणस्याच्युतेत्यादेर्भंग्यारचनयामृन्तितोवृथावस्थानखेदस्तेनालसा कविनिबद्धेति कविनिबद्धेनवक्त्रागुप्तस्येत

मन्युत्वमिति शोभनभ्रूर्दयितादृष्टिश्च तयोः तयोः संबाधनकापारोषविकारश्च रागिण्यनुरागिणीति अवनतेनम्रेदूतिचमयीत्यस्य विशेषणं पक्षेरागि
णि रक्तिमशीले नम्रेइति हकं संबोधनं एवंदृष्टेइत्यपि उच्चारणेनेति स्वरविशेषसहकृतोच्चारणेनेत्यर्थः इतिविकृतोक्तिः युक्तिरिति स्वस्य मर्मगो
पनायक्रियया यत्परस्यातिसंधानं वचनं सा युक्तिरलंकारः त्वामिति नायकंप्रतिदूतीवचनं पुष्पस्येदं पौष्पं दर्पस्तोऽरिति तस्य शुकस्य अतिमात्र

इदं शब्दशक्तिक्रोडीकृतगुप्ताविष्करणं अर्थशक्तिमूलगुप्तार्थाविष्करणं यथा ९ ॥ गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्प
द्यते किंचैवं विजनस्थयोर्हतजनः संभावयत्यन्यथा इत्यामंत्रणभंगिसूचितवृथावस्थानखेदालसामाश्लिष्यन् पुलकोत्क
रांचिततनुर्गोपीं हरिः पातु वः अत्र गच्छाम्यच्युतेत्यामंत्रणेन त्वया रंतुं कामेऽछुपास्थिते तन्न लब्धमित्यर्थशक्तिलभ्यं वस्तु तती
यपादेनाविष्कृतं सर्वमेतत्कविनिबद्धवक्तृगुप्ताविष्करणोदाहरणं कविगुप्ताविष्करणं यथा सुभ्रु त्वं कुपितेत्यपास्तमशनं
त्यक्ताः कथा योषितां दूरादेव विवर्जिताः सुरभयः स्रग्गंधधूपादयः कोपं रागिणि मुंच मय्यवनते दृष्टे प्रसीदाधुना सत्यं त्वद्विरहा
द्भवंति दयिते सर्वा ममांधा दिशः अत्र तावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिः प्रतीयते दृष्टेरागार्तस्य दृष्टे प्र
त्याक्रोशो विवक्षितार्थः स च दृष्टे इत्यस्य पदस्य लुप्तोच्चारणेन संबुद्धिरूपतामवगमय्याविष्कृतः कविनिबद्धवक्तृगुप्तं परवचना
र्थं कविगुप्तं स्वप्रौढिकथनार्थमिति भेदः युक्तिः परातिसंधानक्रियया मर्मगुप्तये त्वामालिखंती दृष्ट्वान्यधनुः पौष्पं करेऽलिखत् अत्र
पुष्पचापलेखनक्रियया मन्मथो मया लिखित इति भ्रांत्युत्पादनेन स्वानुरागरूपमर्मगोपनाय परवचनं विवक्षितं ॥

अत्यर्थं निगदत इति संबंधः फलशब्दो बीजपरः गोपनीयविषयभेदस्य विच्छित्तिभेदाप्रयोजकत्वादाह यद्वेति नन्वेवं सत्यां योनमालोकेत्यादौ व्याजोक्तिरे
वेति प्रागुक्तं विरुध्येतेत्याशंक्याह एवं चेति यद्वेति पक्षांगीकारे चेत्यर्थः एवं च पूर्वग्रंथस्याद्यपक्षाभिप्रायेणेति भावः इति युक्तिः लोकेति अनुकृतिरनुकरणं

कु॰ टी॰ सहस्वेति अर्थोहिरहं मामानभियाप्येत्यर्थः नामैवेति हेवरदततवनामैव वांछितदातृत्वमाख्यातिकथयति अतस्त्वंवरदानमुद्रामितरदैवतवन्नधारयसि

चं॰ यतोविश्वप्रसिद्धतरं विप्रकुलेप्रसूतिस्त्वतियस्यतादृशास्येत्यर्थः इतिलोकोक्तिः छेकोक्तिरिति लक्ष्यनिर्देशः अर्थांतरगर्भिता अर्थांतरव्यंजकतासमी

८१ पस्थ यद्वृतांतः दृष्टस्तत्समीपस्थ सवार्यवेति पृच्छमानदृत्तांतस्तत्समीपस्थ श्चेत्यर्थः तेनलोकोक्त्यनुवादेन ॥ मलयेति व्राताः समूहाः पाताः गताः विका

यथावा दंपत्योर्निशिजल्पतोर्गृहशुकेनाकर्णितंयद्वचस्तत्प्रातर्गुरुसन्निधौनिगदतस्तस्यातिमात्रंवधूः कर्णालंबितपद्मरागश

कलंविन्यस्यचंचूपुटेव्रीडार्ताविदधातिदाडिमफलव्याजेनवाग्बंधनं अत्रशुकवाङ्मुद्रणयात्तन्मुखेनस्वकीयरहस्यवचनश्रु

श्रूषुजनवंचनेकृतं व्याजोक्तावाकारगोपन युक्तौतदन्यगोपनमितिभेदः यद्वा व्याजोक्तावुक्त्यागोपनमिहतुक्रिययागोपनमिति

भेदः एवंच आयांतमालोक्यहरिंप्रतोल्यामितिश्लोकेपियुक्तिरेव लोकप्रवादानुकृतिर्लोकोक्तिरितिभण्यते सहस्वकतिचिन्मा

सान्मीलयित्वाविलोचने अत्रलोचनेमीलयित्वेतिलोकवादानुकृतिः यथावा मदीयेवरदराजस्तवे नामैवतेवरदवांछितदातृ

भावंव्याख्यात्यतोनवहसेवरदानमुद्रां विश्वप्रसिद्धतरविप्रकुलप्रसूतेयज्ञोपवीतवहनंहिनखल्वपेक्ष्यं अत्रोत्तरार्द्धेलोकवादा

नुकारः छेकोक्तिर्यदिलोकोक्तेःस्यादर्थांतरगर्भिता भुजंगएवजानीतेभुजंगचरणंसखे केनचित्कस्यचिद्वृत्तांतेपृष्टस्यसमीप

स्थमन्यंनिर्दिश्यायमेवतस्यवृत्तांतजानातीत्युक्तवतोयमहेःपादानहिरेवजानातीतिलोकवादानुकारः अत्रसवार्यवेलोक

विदितेधनार्जनादिव्यापारेसहचारिणावितिविदितविषयतयालोकोक्त्यनुवादस्यप्रयोजनेस्थितेरहस्येप्यनंगव्यापारेतस्या

सिनासहित्वे कांक्षमाणांपरिमलस्यभेरायस्मिन्तादृशोग्रीष्मोभयेनास्ष्टः हेघनत्वंयथास्तसहसेउत्साहवान् म यंसहवरइतिमर्मोद्घाटनमपितेनग

वसितरातनिः सेहंनायकंघटयअनयासहसयोजयगवानिवर्तनपराधपन्नत्तानांव्यावर्तनेपाप्वप्रभवतिसएवधनंजयोर्जुनइत्यन्वयःलिप्सया प्रेषितस्यांग

ग्राभास्तेलंगाः इमांमत्तखी गोपापोगोतुल्यः इतिछेकोक्तिः वक्रोक्तिरिति काकुध्वंनेविंकारः अपरार्थस्य अभिप्रेतादर्थादर्थांतरस्य नंदीहरस्यगणविशेषस्या
रुणाक्रूरेत्यभिप्रेते काष्ठेनेतिकल्पनं विकृतत्वंचकस्यचिद्वर्णस्यावापोद्वापाभ्यां भवित्रीति सीतांप्रति रावणोक्तिः पादत्रयं चतुर्थस्तप्रतिसीतायाः नेतवपतिः स
रामोयुधिसंयामे पुरतोग्रतोनस्थातास्थास्यतीत्यर्थः अतिशयेनलघुलंघिष्टस्तत्संबोधनं इदंपादत्रयं षष्ठाक्षरास्य राणांसप्तमानांचनिनवीतिवर्णानांवि
लोपेयत्रतादृशापुनः पठेत्यर्थः शब्दश्लेषेति शब्दस्यपरिवृत्त्यसहत्वादितिभावः २ भिक्षेतिजलनिधिश्चहिमवांश्चतत्कन्ययोर्लक्ष्मीपार्वत्योः क्रमे

यथावा मल्लयमरुतांव्रातायाताविकासितमल्लिकायरिमलभरोभग्नोग्रीष्मस्त्वमुत्सहसेयदि घनघटपतंत्वन्निःस्नेहंयएव
निवर्तनेप्रभवतिगवांकिन्नः छिन्नःसएवधनंजयः अत्रधनलिप्सयाप्रोषितांगनासखीवचनेयएवगवांनिवर्तनेप्रभवति स
एवं धनंजयइत्यग्रजातिप्रसिद्धलोकवादानुकारः अत्रातिसौंदर्यशालिनीमिमामपहायधनलिप्सयाप्रस्थितोरसानभि
ज्ञत्वात् गोप्रायएव तस्यनिवर्तकस्त्वधनस्यजेताधनेनाकृष्टस्यतद्विमुखीकरणेनप्रत्याक्षेपकत्वादित्यर्थांतरमपिगभितं
वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनंमुंचमानंदिनंप्रातंनेहनंदिहरांतिके अत्रमानंमुंचप्रयाता रात्रिरित्याशयेनोक्ता
यांवाचिनंदिनंप्राप्तंमामुंचेत्यर्थांतरंश्लेषेणपरिकल्पितं यथावा अहोकेनेदृशीबुद्धिर्दारुणातवनिर्मिता त्रिगुणाश्रूय
तेबुद्धिर्नतुदारुमयीक्वचित् इदमविकृतश्लेषोक्तेरुदाहरणं विकृतश्लेषवक्रोक्तेर्यथा भवित्रीरंभोरुत्रिदशवदनग्लानिर
ः धुनासतेरामःस्थातानयुधिपुरतोलक्ष्मणसखः

णइत्यंलीलयासंलापोमिथोभाषणंनोस्मान्त्रायतामित्यन्वयः इत्थंकीदृक्तदाहभिक्षार्थी
तिहरमभिप्रेत्यलक्ष्म्यावाक्यं वलेर्देत्यस्यमखेयज्ञेइतिवामनाभिप्रायं पार्वत्याः भद्रेशोभनेतांडवंनृत्यमयपक्कवर्ततइतिलक्ष्मीप्रश्नस्योत्तरं वृंदावन
स्थानेमध्येरतिक्षोकृष्णाभिप्रायं मृगाधिपः महादेवेनकरेधृतः परस्तुमृगवराभीतिहसंप्रसन्नमितिध्यानश्रवणात् इदंलक्ष्म्यावाक्यंनेवेतिपार्व

कु॰ टी॰ पंथेोकुरंगेचेतिविस्म्वः कश्चिदितिमध्येजरठोजीर्णः वृषपतिर्वृषश्रेष्ठइतिहरवृषभाभिप्रायं लक्ष्मीवाक्यं गोपोगवांपालकइतिकृष्णाभिप्रायमुत्तरमिति ॥
चं॰ अत्रभिक्षादिपदानांपरिवृत्तिसहत्वादर्थश्लेषमूलत्वं असमालोच्येति अविचार्येत्यर्थः मालया पुष्पमालया इतिवक्रोक्तिः स्वभावोक्तिरितिलक्ष्यनिर्देशः
८२ जात्यादिस्थस्यजात्यादिसंबंधिनः आदिपदेनक्रियादिपरिग्रहः उत्तरंगाणितरंगायमाणान्यक्षीणियेषांतैः ताविति नौप्रक्रांतौवधूवरौ गुरूणांसमी
पे अन्योन्याभिमुखंप्रचलितौपरस्परस्यमार्गप्रदानेयोरभसोवगस्तेनस्खलितंभ्रष्टमवधानंसावधानत्वंययोस्तादृशौउभावपिभिन्नदिकं वामदक्षि

इयंपास्पत्युश्चैविंपदमधुनावानरत्वमूलं घिष्टेदं षष्ठाक्षरपरविलोपात्परं पुनः सर्वमिदंप्राव्दश्लेषमूलापाववक्रोक्तेरुदाहरणं ९
अर्थश्लेषमूलापाववक्रोक्तेर्यथा भिक्षार्थीसक्वयातः सुतनुबलिमखेताडवंकाद्यमद्रेमन्येवृंदावनांतेक्कनुसमृगशिशुर्नैववजा
नेवराहं वालेकचिन्नदृष्टोजरठवृषपतिर्गोपएवास्यवेत्तालीलासंलापइत्थंजलनिधिहिमवत्कन्ययोस्त्रायतांनः काक्वायथा
असमालोच्यकोपस्तेनोचितोयमितीरिता नैवोचितोयमितितंताडयामासमालया अत्रनैवोचितइतिकाकुस्वरविकारेणोचित
एवेत्यर्थांतरकल्पन स्वभावोक्तिः स्वभावः स्वजात्यादिस्थस्यवर्णनं कुरंगैरुत्तरंगाक्षैः स्तब्धकर्णैरुदीक्ष्यते यथावा तौसन्मुख
प्रचलितौस्खविधेगुरूणांमार्गप्रदानरभसस्खलितावधानौ पार्श्वापसर्पणमुभावपिभिन्नदिक्कंकृत्वामुहुर्मुहुरुपासरतांसल
ज्जं भाविकंभूतभाव्यर्थसाक्षात्कारस्यवर्णनं अहंविलोकयेऽद्यापिपुध्यंतेत्रसुरासुराः स्थानभीषणत्वोद्भावनपरमिदं ॥

णरूपदिकसंबंधिपरस्परपार्श्वमार्गोपसर्पणंमुहुः कृत्वासलज्जंयथास्यात्तथोपासरतां उपसर्पणंचक्रतुरित्यर्थः पूर्वोदाहरणेकुरंगजातिस्वभाववर्णनं अत्र
सलज्जक्रियास्वभाववर्णनमितिभेदः इतिस्वभावोक्तिः भाविकमितिलक्ष्यनिर्देशः ९ अद्यापीति ममनयनंनयनमितितस्याकांचनिशम्यस्तनतटास्पतितु
मुत्तरीयंधर्तुंपुरः प्रवृत्तेमयिसतितदाआयताक्षीयत्किंचित्स्मितमकरोत् इदमद्यापिममदृशोः पुरस्तिष्ठतीत्यन्वयः अत्रनयनपदेजरक्वाचकत्वरूपशक्य

संबंधनेनेत्रपदंलक्ष्यते तस्माच्च वस्त्रप्रतीतिः

भिंवास्ववाचकवाच्यत्वरूपशाक्यसंबंधेन वस्त्वमेवलक्ष्यतीति वचोवाणैरित्यादिवक्त्राक्षितत्लक्षणावाबोध्या नेत्रंपथिगुणेवस्त्विति विभ्वः इति भाविकं उदात्तमि
ति ऋद्धेः समृद्धैश्वरितं उदात्तालंकारः तथा श्लाघ्यं चरितं अन्यस्योपलक्षणमंगं चेतदपि तथा सानौ शिखरे यस्य पर्वतस्य किरीटी अर्जुनः हृच्छात् कष्टात् आ
जनेयेन हनूमता इत्युदात्तं असदुक्तिरिति लक्ष्यनिर्देशः अद्भुतं च तदतथ्यं मिथ्यारूपं अकूपाराः समुद्राः आहुरिति भ्रमते तु तथ्यत्वातथ्यत्वाभ्यां भेद इति

यथावा अद्यापि तिष्ठति दृशोरिदमुत्तरीयं धर्तुं पुरस्तनतटात्पतितं प्रवृत्ते वाचं निशम्य नयनं नयनं ममेति किंचित्तदायदकरोत्
स्मितमायताक्षी उदात्तमृद्धैश्वरितैः श्लाघ्यैश्चान्योपलक्षणं सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः इदं श्लाघ्यचरितस्यान्यांग
त्वेउदाहरणं ऋध्युदाहरणं यथा रत्नस्तंभेषु संक्रांतैः प्रतिबिंबशतैर्वृतः ज्ञातो लंकेश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः असदुक्तिरद्भु
तातथ्यं शौर्योदार्यादिवर्णनं त्वयि दातरि राजेंद्र याचकाः कल्पशाखिनः इयमौदार्यासदुक्तिः शौर्यासदुक्तिर्यथा राजन्सप्ताप्यकूपा
रास्त्वत्प्रतापाग्निशोषिताः पुनस्त्वद्वैरिवनितावाष्पपूरेण पूरिताः संपदसदुक्तावुदात्तालंकारः शौर्यासदुक्तावत्युक्त्यलंकार इ
तिभेदमाह अनयोरनवद्यांगि स्तनयोर्जृंभमाणयोः अवकाशो न पर्याप्तस्तव बाहुलतांतरे अल्पं निर्मितमाकाशमना ६६
लोच्यैव वेधसा इदमेवंविधं भाविभवत्याः स्तनमंडलमिति सदसदुक्तितारतम्येनातिशयात्युक्त्योर्भेदः ५ निरुक्तिर्योगतो टि
नाम्नामन्यार्थत्वप्रकल्पनं ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् यथावा पुराकवीनां गणनाप्रसंगे कनिष्ठिकाधिष्ठितका ९

भावः अतथ्ये अद्भुतत्वविशेषणस्य कृत्यं दर्शयति अनयोरित्यादि एतत्पद्यपोगेप्ययोगोऽसंबंधातिशयोक्तिरित्यत्र प्रागुदाहृतं असदुक्तितारतम्येनेति
अनयोरित्यत्रासदुक्तिमात्रं अल्पमिति पद्ये त्वत्यंतासदुक्तिरिति तारतम्येनेत्यर्थः तथाचाद्भुतेति विशेषणादत्यंतातथ्यरूपत्वलाभान्नातिशयोक्ता
वतिप्राप्तिरिभावः अत एवानयोरिति पद्यानंतरं दंडिनोक्तं इति संभाव्यमेवैनद्विशेषाख्यानसंस्कृतमिति एवलोकातीत इवास्यर्थमध्यारोप्य विवक्षितः।।

कु॰टी॰
चं॰
८३

पोर्थस्तेनातितुष्यंति विदग्धा नेतरे यथेत्युक्ता अल्पं निर्मितमित्याद्युदाहृतइदमत्युक्तिमिति च इत्यत्युक्तिः ॐ निरुक्तिरिति लक्ष्यं योगवशान्नाम्नामर्थविशेषाभिधायि
नामर्थांतरोपवर्णनमिति लक्षणं ईदृशैरिति चंद्रं प्रति विरहिण्या उक्तिः ईदृशैर्जनसंतापनरूपैः दोषायारात्रेः कर्त्ता दोषाणामाकरश्चपुरेति कनिष्ठिकांगुलि
विशेषः अधिष्ठितः कालिदासो यस्याः सा अंगुलिविशेषरूपा अर्थवती नविद्यते कविनामयस्यांसेत्यन्वर्थनामवती इति निरुक्तिः कितवो द्यूतकृत् धूर्तोऽक्ष
देवी कितव इत्यमरः ननुप्रसिद्धानुवादस्याचमत्कारित्वात्कथमलंकारत्वमत आह निर्ज्ञात इत्यादि शाकुनैपाशकैर्दीव्यतीति शाकुनिकः आविष्कृतमिति ध्व

अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्त्तनं नद्यूतमेतत्कितवक्रीडनं नि
शितैः शरैः निर्ज्ञातो निषेधः स्वतोनुपयुक्तत्वादर्थांतरं गर्भीकरोति तेन चारुतान्वितोयं प्रतिषेधनामालंकारः उदाहरणं यु
द्धरंगे प्रत्यवतिष्ठमानं शाकुनिकं प्रति विदग्धवचनं तत्र युद्धस्याक्षद्यूतत्वाभावो निर्ज्ञात एव कीर्त्यमानस्तत्रैव तव प्रागल्भ्यं नयु
द्धमित्युत्पत्तिग्रहोस्तीत्युपहासं गर्भीकरोति तच्च कितवेत्यनेनाविष्कृतं यथा वा न विषेण न शस्त्रेण नाग्निना न च मृत्युना अप्रती
कारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः अत्र स्त्रीणां विषादिनिमितत्वाभावः प्रसिद्ध एव कीर्त्यमानस्तासां विषायति सापि क्रौर्य
मिति अमुमर्थं व्यक्तीकरोतीति स चाप्रतीकारपारुष्यादिति प्रतीकारवर्ज्यो विषादिभ्यस्तासां विशेषं दर्शयता विशेषणेनावि
ष्कृतः सिद्धस्यैव विधानं यत्तदाहुर्विध्यलंकृतिं पंचमोद्‌ञ्चने काले कोकिलः कोकिलो भवेत् निर्ज्ञातविधानमनुपयुक्तिबा
धितं सदर्थांतरगर्भीकरणेन चारुतरमिति तद्विधिनामा नमलंकारमाहुः

नित्वशंकानिवारणं एवमग्रेपि इति प्रतिषेधः पंचमस्य स्वरविशेषस्योद्‌ञ्चनमाविष्कार
णं यत्र तादृशे काले कोकिलः कोकिलो मध्यध्वनिरभूवदित्यर्थः द्वितीयकोकिलपदस्यानुपयुक्तार्थत्वेनार्थांतरे संक्रमितत्वात् सकलजनहृद्यत्वप्रतीतिश्च प्रयोज
नं एवव्यालितयेत्यनंतरं लक्षितं बोध्यः पूर्ववत् ध्वनिका शंकानिवारणाय तच्चेत्याद्युक्तं ॐ हे हस्तेति शूद्रतपस्यजनिताधर्मवशादपूर्णायुषि द्विजबालके मृते तद्वधा

यतस्य रामस्य स्वहस्तं प्रति इयमुक्तिः

जीवातवे जीवनाय शूद्र एव तपश्चरणान्मुनिरिव मुनिः तस्मिन् कृपाणं खड्गं विसृज निक्षिपयतो रामस्याकरुणस्य पात्रं शरीरमसि निर्भरमति प्रायेण गर्भखिन्नायाः सी
तायाः प्रवासने निर्वासने तत्र पटो दक्ष असीत्यर्थः अत्र रामपदमकरुणत्वरूपार्थान्तरसंक्रमितं तदतिप्रायो व्यंग्यः स चात्यंतमित्यनेनोक्तः ध्वनिभावास्पदानि त्वप्र
योजकानि व्यवस्थितत्वादिति शब्दार्थद्वारा त्वाऽक्षिप्तोऽपि व्यंग्योर्थः कविना पुनः यत्र विक्षिप्यते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेरिति ध्वनिकारवचनेन निर्णीतत्वा
दित्यर्थः उक्ताविति निषेधाभासस्याक्षेपं बुधाः केचन मन्वते आक्षेपोन्यो विधीयमाने निषेधे च तिरोहितः इत्येताभ्यां नाहं दूती गच्छसीत्युदाहरणयोः प्रतिपादि

उदाहरणे कोकिलस्य कोकिलत्वविधानमनुपयुक्तं सदतिमधुरपंचमध्वनिशालितया सकलजनहृद्यत्वं गभीकरोति तच्च पंमो
देवने इति कालविशेषणेनाविष्कृतं ॥ यथा वा हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणं रामस्य
गात्रमसि निर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते अत्र रामस्य स्वहस्तं प्रति रामस्य गात्रमसीति वचनमनुपयुक्तं सद्रा
मस्येत्यनेन स्वस्यात्यंतनिष्करुणत्वं गभीकरोति तच्च निर्भरेत्यादिविशेषणेनाविष्कृतं यच्चाप्यनयोर्विधिनिषेधयोरुदाहरणेषु
व्यंग्यान्यर्थान्तरसंक्रमितवाच्यरूपाणि तथापि न ध्वनिभावास्पदानि स्वोक्त्यैव व्यंग्यविशेषाविष्करणात् व्यंग्याविष्करणे चालंका
रत्वमेवेति प्राक् प्रस्तुतांकुरप्रकरणे व्यवस्थितत्वात् पूर्वबाधितौ प्रतिषेधौ आक्षेपभेदत्वेनोक्तौ इह तु प्रसिद्धौ विधिप्रतिषेधौ तत्प्र
तिद्वंद्विनावलंकारत्वेन वर्णिताविति भेदः हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवां यथा वा

तानीत्यर्थः प्रसिद्धत्वाद्बाधितप्रतिद्वंद्वित्वं इति विधिः हेतोरिति हेतुमता कार्येण मानच्छेदः कार्यं एष इति विद्रुमच्छायः प्रवालकांति विगततरुच्छायपश्चमकर्नि
जेरलदेशः माने इति मानेनेच्छति अनिच्छति सति एवमुपशमेवारयति सति ह्रियां लज्जायां अस्माभूमिमालिखत्यं भूस्पृहेस्वनस्पतदनुभावत्वात् स्वातंत्र्येच रिवृ
यपराङ्मुखीभूय तिष्ठति सति धैर्यं करोत्याधूय ममनानुमतमिति सूचनाय हस्तधूननं कृत्वा गते सति हे तन्वि त्वामनुसरतामुनाजनेनेतावत्फलं प्राप्तं पत्यादेनापि

स एव चरणौ स्त्रीयौ स्पृष्टुं न सम्यक् मन्यते अनुजानातीत्यन्वयः अत्र तृष्णारूपहेतुतत्कार्ययोः स्पष्टमभिधानं ॥ भेदांतरमाह हेतुहेतुमतोरिति केचित् भट्टोद्भटप्रभृत
यः तदुक्तं हेतुमता सह हेतोरभिधानमभेदतो हेतु रिति लक्ष्मीति कटाक्षाः विदुषां लक्ष्मीविलासा इत्यन्वयः अत्र विलासहेतोर्विलासाभिन्नत्वेनाभिधानं एवंवि
धलक्षणायाः प्रयोजनमाह अत्रेति कार्यावश्यंभावश्च तच्छैघ्र्यं चेति विग्रहः आदिनाऽपथ्याशनं रोग इत्यादौ कार्यगतोपादेयत्वानुपादेयत्वादि संग्रहः आ
पुरिति वीरः कलिंगेश्वरः कलिंगदेशाधिपो विजयत इत्यन्वयः कीदृशः दानरूपस्य महोत्सवस्य आपुरिति कार्याभिन्नत्वेनाभिधानं एवमग्रेपि विशेषेण न

एषा ते विद्रुमच्छायो मरुमार्गइवाधरः कस्य नो तनुते तन्वि पिपासाकुलितं मनः मा लेने छुतिचारयत्युपशमे स्मामालिस्वं त्वां हि याः स्वा
तं स्पृष्टं परिवृत्य तिष्ठति करौ आधूय धैर्यं गते तृष्णोत्तामनुवध्नता फलमियत्प्राप्तं जनेनामुना यत्स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्य
ते इत्युदाहरणं ॥ हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते लक्ष्मी विलासा विदुषां कटाक्षा वेंकटप्रभोः अत्र च कार्यावश्यंभावतच्छैघ्र्या
दिप्रत्यायनार्थः कार्यकारणभेदव्यपदेशः यथा वा आपुर्दानमहोत्सवस्य विततक्षोणीभृतां मूर्तिमान् विश्वासो नयनोत्सवो मृगदृ
शां कीर्तेः प्रकाशः परः आनंदः कलिताकृतिः सुमनसां वीरश्रियो जीवितं धर्मस्यैष निकेतनं विजयते वीरः कलिंगेश्वरः अत्र दानम
होत्सवायुष्करत्वादिनाध्यवसितेराज्ञितदायुष्ट्वादिव्यपदेशः इत्थं शतमलंकारा लक्षयित्वा निदर्शिताः प्राचामाधुनिकानां च मतान्या
लोच्य सर्वतः रसभावतदाभासभावशांतिनिबंधनाः चत्वारो रसवत्प्रेयऊर्जस्विच्च समाहितं भावस्य चोदयः संधिः शबलत्वमिति त्रयः

तानां क्षोणीभृतां राज्ञां कलिताकृतिः धृताकारः वीरश्रियः वीरलक्ष्म्याः निकेतनं स्थानं इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यभट्टविट्ठलसूरिवरात्मज
श्रीरामचंद्रसूरिसूनुना वैद्यनाथेन कृतायामलंकारचंद्रिकाख्यायां कुवलयानंदटीकायां हेत्वलंकारप्रकरणं संपूर्णं भावस्येति निर्वेदादेर्व्यभिचारिभावस्ये
त्यर्थः प्रत्यक्षप्रमुखाः प्रत्यक्षाद्याः ते च प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैतिह्याख्याः विभावेत्यादि रत्यादिरालंबनोद्दीपनरूपाणि न्यायिकाश्चं

कार्यकारणाभिकाशेवर्ण्यमानातिविभावप्रकीर्तिता
स्थायिविभावपदं

